# मीमांसादर्शनविमर्शः

*STUDIES IN MIMĀMSĀ PHILOSOPHY*

डॉ० वाचस्पति उपाध्याय
दिल्ली विश्वविद्यालय

भारतीय विद्या प्रकाशन
दिल्ली (भारत) वाराणसी

प्रकाशक :

भारतीय विद्या प्रकाशन

१. १ यू० बी० बैंग्लो रोड, जवाहर नगर
दिल्ली—११०००७

२. पो० बा० १०८, कचौड़ी गली
वाराणसी—२२१००१

प्रथम संस्करण : अप्रैल, १९७६
मूल्य २०.००

मुद्रक: अमर प्रिंटिंग प्रेस (शाम प्रिंटिंग एजेंसी) ८/२५ विजय नगर, दिल्ली-९



पूज्यपाद पितृचरणाः स्व० पण्डित रमाकान्तशास्त्रिणः

म्

## समर्पणम्

विद्वन्मान्यतमं वदान्यचरितं शास्त्राब्धिपारङ्गतं
कान्तं भव्यगुणैः कवीश्वर 'रमाकान्तं' स्वतातं मुदा ।
नत्वाम्बाञ्च 'तपेश्वरी' कृतिमिमां श्रद्धानतो बालक-
स्तद्हस्ताब्जयुगेऽर्पयत्यभिनवां वाचस्पतिः सादरम् ॥

पट्टाभिरामो नयनाभिरामः
विनाशयन् यो जगतोऽन्धकारम् ।
विभाति विद्यामणिदीपभासा
भद्राय तस्मै गुरवे नमोऽस्तु ॥

# FOREWORD

I have great pleasure in introducing to the world of scholars the book *Mīmāṁsādarśanvimarśaḥ*, by my colleague Dr. Vachaspati Upadhyaya. He has had the benefit of studying Mīmāṁsā after the traditional manner from the well-known scholar Pandit Pattabhiram Sastri. There are few in the country who pursue the study of this system of philosophy now-a-days, most probably because it is too abstruse to interest them. That Dr. Upadhyaya is one of those few is really very heartening. He has studied in depth the relevant literature pertaining to this system. The present work happily bears the stamp of that depth and profundity.

The first chapter of the book deals with the agelong problem of the Veda and its impersonal origin. An attempt has been made to discuss this issue from the view point of Naiyāyikas, at the outset, followed by a detailed account of the Mīmāṁsakas relying mainly on the arguements advanced by Kumārila Bhaṭṭa in his *magnum opus* the *Ślokavārtika* and Parthasarathi Miśra in his *Śāstradipīkā*.

While discussing the valid means of knowledge, the authorities to bring the main differences of opinion between the Bhāṭṭa school and the Prābhākara school. In presenting the view point of the later school, Śālikanātha, the celebrated writer of Prakaraṇapañcikā has been mainly consulted in view of the fact that he happens to be the acknowledged authority on the Prābhākara school of Pūrva-Mīmāṁsā.

The author discusses some cardinal principles like the theory of Illusion. He also goes into the question as to whether cognition is to be realized through itself or through inference. In this connection the author clearly states the point of view of the idealist Buddhist and gives a simple exposition of the 'Nirālambanavāda and the Śūnyavāda.'

In this respect the position of the Prābhākara Mīmāṁsaka may be stated as follows :

According to the Prābhākara school, cognition is self-luminous (Svaprakāśa), the cognizing subject, the object of cognition and the cognition itself are apprehended at one and the same point of time. This theory of knowledge is known as Tripuṭīpratyakṣavāda or the theory of triple perception and Vivekakhyativāda or theory of error. Kumarila Bhaṭṭa, however, maintains that cognition is not self-luminous, it is inferred on the strength of a property known as cognizedness (Jñātatā) which is produced in the object through the cognition.

Philosophical thinkers of Nyāya and Mīmāṁsā schools have been at variance with each other with regard to the manner in which the validity (prāmāṇya) of a cognition is apprehended. It is interesting to note that in the opinion of some thinkers all cognitions are dubious in nature (Saṁśaya) and thus it is not within the purview of the cognizer to determine the validity (prāmāṇya) or otherwise (a-prāmāṇya) of any cognition. But this is not accepted by many according to whom it is possible to ascertain or apprehend the validity or invalidity of a cognition. These thinkers are, however, divided into two camps : the advocates of Svataḥ-prāmāṇya and the advocates of the Paratah-prāmāṇya.

The author has discussed in detail the view points of these two aspects of the Prâmāṇyavāda and has sought to explain that the arguements advanced by the Naiyāyikas have been refuted by several Mīmāṁsakas in view of the fact that they (the Mīmaṁsakas) had to establish the Svataḥ-prāmāṇya aspect of the Vedas.

From what has been stated above it will be clear that the present work is a stimulating piece of research and will be warmly welcomed as such by the world of scholars.

Satya Vrat Shastri

Professor and Head of the
Deptment of Sanskrit and Dean
Faculty of Arts,
University of Delhi

Rāmanavamī
9-4-1976

# निवेदनम्

'मीमांसादर्शनविमर्शः' इति प्रबन्धं विदुषां सम्मुखमुपस्थापयन् किञ्चिन्निवेदये । 'मीमांसा' पदं पूज्यविचारपरमिति श्रीमन्तो वाचस्पतिमिश्रा अभिवदन्ति । विचारे पूज्यत्वञ्च पक्षपातरहितत्वमेव विषयं संशयं पूर्वपक्षं तद्युक्तीः, उत्तरपक्षं तद्युक्तीः, प्रयोजनञ्च प्रतिपाद्य याथातथ्येन वेदवाक्यार्थनिर्णयाय प्रवृत्तमिदं शास्त्रम् । अतएवेदं वाक्यशास्त्रमित्यपि प्रथते । 'तस्य-निमित्तपरीष्टिः' इति सूत्रयन् भगवान् जैमिनिः परीक्षाशास्त्रमित्यप्यवद्योतयति । परीक्षा च पक्षपातरहितैव भवतीति सर्वसंविदितम् । 'मीमांसाख्या तु विद्येयं बहुविद्यान्तराश्रिता' इति कथयन् भट्टपादशास्त्रस्यास्य महत्त्वं प्रतिपादयति । प्रमाणानां प्रमेयानाञ्च यथायथं स्वरूपं निरूपयितुं गौतमीयं काणादञ्च शास्त्रं प्रवृत्तम् । तत्प्रतिपादने न मीमांसाशास्त्रस्य व्यापारः, तथापि वेदवाक्यार्थनिर्णयाय नूतनः पन्था आश्रयणीय इति शबर-भट्टपादप्रभृतयस्तानि निरूपयाम्बभूवुः । नैयायिकाभिमतैश्चतुर्भिरेव प्रमाणैः क्वचिद्वेदवाक्यार्थनिर्णयो न सम्भवतीति तदतिरिक्तमपि प्रमाणं प्रसाधनीयमापन्नं मीमांसकानाम् ।

तत्र वेदस्य दृढतरप्रामाण्यप्रसिद्धये स्वतस्त्वं प्रामाण्यस्य स्वीकृतं मीमांसकैः तत्सिध्यर्थञ्च ज्ञानसामान्यनिष्ठप्रामाण्यस्यापि स्वतस्त्वं व्यवस्थापनीयमित्यप्यापतितम् । तत्रापि दर्शनान्तरैस्सह मीमांसादर्शनस्य क्व वा संवादः, क्व च विसंवाद इत्यत्रापि प्रबन्धेऽस्मिन् दृष्टिः प्रसारिता।

> "परस्परं विरोधे तु वयं पञ्च शतञ्च ते ।
> अन्यैः सह विरोधे तु वयं पञ्चोत्तरं शतम् ।।"

इति नैयायिकं न्यायमनुसृत्य प्रामाण्यविषये नास्तिकदर्शनानामास्तिकदर्शनानाञ्च कियत्साम्यम् कियच्च वैषम्यम् इत्यप्यत्र विमर्शः कृतः । तत्रापि विशेषतो नैयायिकैस्सह मीमांसकानां प्रामाण्यविषये विरोधे सत्यपि कथं स विरोधः परिहृतो भवतीत्यपि विचारः प्रवर्तितः ।

पूर्वजैर्ग्रन्थेषु प्रतिपादितानेव विषयान् इतस्ततः संकलय्यैव प्रबन्धोऽयं मया व्यरचि, न नूतनं किञ्चिदत्रोद्भावितम् । मन्दमतेर्मम गभीरस्यास्य विषयस्य

नूतनतामापादयितुं मतिः कथं प्रसरेत् ? तथापि प्रबन्धोऽयं मत्परिश्रमस्य किञ्चिदवद्योतक एव स्यादिति विश्वसिमि ।

अतिगभीरेऽस्मिन् विषयगहने प्रवेष्टुं बिभ्यतो मे सूक्ष्मान् मार्गान् सम्प्रदर्श्य विषयांश्चावबोध्य मामत्र प्रवर्तितवतां प्राच्यपाश्चात्यदर्शनेष्वकुण्ठितमतिवैभवानां शिष्यजनवत्सलानां गुरुचरणानां श्रीगौरीनाथशास्त्रिणां कृतेऽहं सर्वथाधमर्णः । पूज्यपादेभ्यः पूर्वतन्त्रमलंकारशास्त्रमन्यञ्च संस्कृतवाङ्मयमध्याप्य मामस्यां स्थितौ समानीतवद्भ्यः विद्यासागरेभ्यः श्रीपट्टाभिरामशास्त्रिभ्यश्च मदीयाः सहस्रशः प्रणतीः समर्पये ।

विदुषां मूर्धन्यतमैः विद्वद्वर्यैः दिल्लीविश्वविद्यालयस्य संस्कृतविभागाध्यक्षैश्च डा० सत्यव्रतशास्त्रिमहाभागैः अहं समये समये बहुश उपकृतः एष उपकारो न मया विस्मर्तुं शक्यते । अग्रजप्रतिमेन डा० हर्षनाथमिश्रमहोदयेन यथाऽयं ग्रन्थः प्रकाशितस्स्यात् तदर्थं यत्नः कृतः अतस्तं प्रति स्वकीयां कृतज्ञतां बिभर्मि । कलिकातायां विराजमानौ पितृव्यचरणौ श्रीमदुमाकान्तशिवाकान्तौ स्वर्यातस्य जनकस्य स्थानिनौ । तयोः आशिषा इदं सुसम्पन्नमिति तौ प्रणम्य विरमति ।

विदुषां चरणचञ्चरीकः
वाचस्पतिः

# विषय-सूची

# प्राक्कथनम्

कस्याञ्चन परिषदि समवेतास्तपोनिष्ठा महर्षयः पूर्वजाः, जगत्युष्कृष्टतमं तत्त्वं निर्णेतुं प्रवृत्ताः । तत्र स्वस्वाभिमतं निरूपयितुं प्रवृतेषु नाम्ना राथीतरः सत्यमुत्कृष्टतमं तत्त्वमिति प्रतिपादयामास । पौरुशिष्टिनामा महर्षिः तपः तदित्यब्रवीत् । मौद्गल्यस्तु स्वाध्यायप्रवचने एवेत्यभिप्रैति स्म । "सत्यमिति सत्यवचा राथीतरः, तप इति तपोनित्यः गोरुशिष्टिः, स्वाध्यायप्रवचने एवेति नाको मौद्गल्यः" ।[1] तपस्सत्यापेक्षया स्वाध्यायप्रवचनयोरेव प्राधान्यमिप्येवकारेण द्योतयति मौद्गल्यः । तपस्तु कर्मानुष्ठानम्, सत्यञ्च व्यवहारोपयुक्तम् । अनयोस्सिद्धिः स्वाध्यायप्रवचनाभ्यामिति पृथग्यत्नस्तत्र नापेक्षित इति मौद्गल्याशयः ।

कुलपतिर्भरद्वाजः त्रिभिरायुभिर्ब्रह्मचर्यं चरित्वा स्वाध्यायप्रवचने कृतवानिति श्रूयते—भरद्वाजो ह वै त्रिभिरायुभिः ब्रह्मचर्यमुवास इति ।[2]

त्रयो धर्मस्कन्धाः—यज्ञोध्ययनं दानमिति प्रथमः, तप एव द्वितीयः ब्रह्मचार्याचार्यकुलवासी तृतीयोत्यन्तमात्मानमाचार्य कुले व सादय एते पुण्यलोका भवन्ति ब्रह्मसंस्थोऽमृतत्वमेति ।[4] इति छान्दोग्योपनिषत्सन्दर्भेण स्वाध्यायप्रवचनयोर्धर्मस्कन्धत्वमवगम्यते ।

सनत्कुमारादध्येतुं गतो नारदः सनत्कुसारेण किं त्वं वेत्सीत पृष्टः- ऋग्वेदं भगवोऽध्येमि, यजुर्वेदं सामवेदमाथर्वणं चतुर्थमितिहासपुराणं पञ्चमं, वेदानां वेदं पित्र्यं राशिं, दैवं, निधिं वाकोवाक्यमेकायनं, देवविद्यां ब्रह्मविद्यां भूतविद्यां क्षत्रविद्यां नक्षत्रविद्यां सर्पदेवजनविद्यामेतद्भगवोऽध्येमि[3] इति स्वाधीताः प्रभूताविद्याः परिगणयन्नपि स्वस्य मन्त्रविदेवास्मि नात्मवित् इत्यादिनाऽपरिपक्वमतित्वं प्रख्यापयति । एवमादिभिरनल्पैः प्रमाणैरिदमभ्यूहितुं शक्यते—यद्भारतवर्षे चिरादेवाध्ययनाध्यापनसम्प्रदायः प्रावर्ततेति । स्वा-

---

१. तैत्तिरीयशिक्षावल्ली-नवमोऽनुवाकः ।

२. तैत्तिरीय संहिता—

३. छान्दोग्योपनिषद्—(२-२३-१) ।

ध्यायप्रवचनसम्प्रदायस्यास्य प्रवर्त्तने प्राचां न केवलं स्वार्थसिद्धिरेव प्रयोजनम्। किन्तु विश्वस्मिन् जगति जनतायां सन्तोषस्य शान्तेः धर्मस्य च व्यवस्थापनम्।

**यच्छ्रुतं न विरागाय न धर्माय न शान्तये।**
**सुबद्धमपि शब्देन काकबाशितमेव तत् ॥**[५]

इति कथयन् भगवान् व्यासः पूर्वोक्तप्रयोजनायैवायं सम्प्रदाय इत्येव-द्योतयति। काम पि मनोरमां विद्यां विना जगतो राष्ट्रस्य समाजस्य वा स्थितिरेव न सम्भवेदिति विमृश्य पूर्वजाः चतुर्दश[६] विद्यानां स्थानानि परिकल्प्य तेषां धर्मस्थानत्वमपि व्यवस्थापयाम्बभूवुः। तत्राप्यशोकवाटिकास्थितां सीताम्—

**आम्नायानामशोगेन विद्यां प्रशिथिलामिव**[७]

इत्युपभिमन्वानो भगवान् वाल्मीकजन्मा महर्षिः सर्वासां विद्यानाम् आम्ना-यापरपर्यायवेदसम्बन्धमनिवार्यं प्रतिपादयन् वैदिकत्वं प्रख्यापयति। स्वस्वसिद्धा-न्तव्यवस्थायां दार्शनिकाः शास्त्रकारा वा नूनं मिथः कलहायन्ते, एकस्य पन्थान-मपरो नानुसरति, तथाप्येकेन वेदसूत्रेण संग्रथिता एकतां भजन्ते। यथा— सर्वेषां ज्योतिषां भास्करः, यथा वा सर्वासां नदीनां सागरः, सर्वासांच भाषाणां यथा संस्कृतम्, यथा वा सर्वस्य जगतः परं ब्रह्म, तथैव निखिलस्य संस्कृत-वाङ्मयस्य वेद एव प्रभवो गतिश्चाभवत्। प्राञ्चो महर्षयो वेदशब्दाभिधेयं शब्दसन्दर्भं देशस्य महान्तममूल्यं निधिं पर्यगणयन्। तस्य निधेर्यथावत्परिपालने सर्वोऽपि यथाधिकारं प्रायतत। देशे सर्वत्र वैदिकमतस्य भूयान् प्रचारोऽभवत्। वेदोदितानि कर्माण्यामुष्मिकफलकानि ऐहिकसंवलितामुष्मिकफलकानि ऐहि-कानि च सर्वाणि यथायथं सर्वेऽपि यथाधिकारमन्वतिष्ठन्। गुरुशिष्यपरम्परा-सूत्रस्य परिपालनं सर्वेऽपि सश्रद्धमकुर्वन्। तेन च परमाशान्तिः भूयान् सन्तोषो लोकैरवाप्यते स्म। अधुनापि भारते चतुर्वेदी (चौबे) त्रिवेदी (तिवारी) द्विवेदी (दुबे), इत्युपनाम धारयन्तो बहवः कुटुम्बास्तत्र तत्र व्याप्ता वर्तन्ते। इमे

---

४. छान्दोग्योपनिषद्—(७-१-२)।

५. महाभारत।

६. पुराणन्यायमीमांसाधर्मशास्त्राङ्गमिश्रिताः।
वेदाः स्थानानि विद्यानां धर्मस्य च चतुर्दश ॥
—याज्ञवल्क्यस्मृतिः।
आचाराध्यायः उपोद्घातप्रकरणम्, श्लोक-३, पृष्ठ-२।

७. वाल्मीकिरामायण-सुन्दरकाण्डम्।

तस्मादेव कुटुम्बात् जनिमलभन्त, यस्मिंश्च पूर्वजाः चतुरः, त्रीन्, द्वौ वा वेदानधीत्य तत्र परिनिष्ठता अभवन्। प्राचामार्याणां चरितानि परामृशतो मे प्रतिभाति-यत्सोऽयमत्र भगवान् वेदपुरुषः स्वीयमनितरसाधारणं सर्वभौमं प्रामाण्यमावहन् निजाज्ञावशंवदान् लोकान् वर्णाश्रमसम्प्रदायधर्मैर्विभिन्नानपि यथामर्यादं प्रशास्ति स्मेति। किं कारणमियतीं श्रद्धामाबबन्धुर्वेदेषु प्राञ्चस्सुमतयः? केचिद्वदेयुः—यन्मनुष्यशक्तिमतिक्रम्य विद्यमानं वर्षाविद्युदादिकं भूयोभूयस्संवीक्ष्य विवृद्धविस्मयानां प्राचामार्यपुरुषाणां विविधचित्तवृत्तिपरिवादोद्गारोऽयमेतावान् शब्दराशिरिति। तदेतेषामेष दुस्समाधानः प्रश्नः कच्चित् कालयापनाय मनोविनोदाय वा यथा तथा विरचितं किमपि, महता क्लेशेन साध्ये यजनयाजनादौ ते प्रमाणीकुर्युः? कच्चित्सुबहुपरिश्रम्याधीतवन्तः स्युः? नूनं तेषां कीकससहिता रसज्ञा। न नाम तेषां वाचि श्रमः। यत्तेभ्यो रोचतेहृदयमागतं तत्ते वदन्तु वेदबाह्या[८] वेदसम्पर्कशून्या वा।

---

८. अत्र विश्वेषां लोकानां प्रवृत्तेरदृष्टं परलोकादिकं प्रसाधयतां श्री-मतामुदयनाचार्याणाम्—

विफला विश्ववृत्तिर्नोऽन दुःखैकफलापिवा।
दृष्टलाभफला नापि विप्रलम्भोऽपि नेदृशः॥
(न्यायकुसुमांजलि १ स्त०, ८ कारिका)

इति कारिकाया विवरणपराणि इमानि ...।

यदि हि पूर्वपूर्वभूतपरिणतिपरम्परामात्रमेवोत्तरतरनिबन्धनं, न परलोकार्थी कश्चिदिष्टापूर्तयोः प्रवर्त्तेत। नहि निष्फले दुःखैकफले वा कश्चिदेकोऽपि प्रेक्षापूर्वकारी घटते, प्रागेव जगत्। लाभपूजाख्यात्यर्थमिति चेद्, लाभादयः एव किन्निबन्धनाः? न हीयं प्रवृत्तिः स्वरूपत एव तद्धेतुः। यतो वाऽनेन लब्धव्यं, यो वैनं पूजयिष्यति। सकिमर्थम्। ख्यात्यर्थमनुरागार्थं च। जनो दातरि मानयितरि च रज्यते। जनानुरागप्रभवा हि सम्पद इति चेत्, न। नीतिनर्मसचिवेष्वेव तदर्थदानादिव्यवस्थापनात्। त्रैविघ्यतपस्विनो धूर्तवका एवेति चेन्न। तेषां दृष्टसम्पदं प्रत्यनुपयोगात्। सुखार्थं तथा करोतीति चेन्न। नास्तिकैरपि तथाकरणप्रसंगात्। सम्भोगवत्। लोकव्यवहारसिद्धत्वादफलमपि क्रियते वेदव्यवहारसिद्धत्वात्। सन्ध्योपासनवदिति चेद्, गुरुमतमेतन्न तु गुरोर्मतम्। ततो नेदमवसर एव वक्तुमुचितम्। वृद्धैर्विप्रलब्धत्वाद् बालानामिति चेन्न। वृद्धानामपि प्रवृत्तेः। न च विप्रलम्भकाः स्वात्मानपि विप्रलभन्ते। तेऽपि वृद्धतरैरित्येवमनादिरिति चेत्। न तर्हिविप्रलिप्सुः कश्चिदत्र, यतः प्रतारणदण्डकः स्यात्। इदम्प्रयन एव कश्चिदनुष्ठायापि धूर्तः परानुष्ठापयतीति चेत्। किमसौ सर्व-

पूर्वजाः समस्तं द्वन्द्वदुःखमीषदप्यगणयन्तः स्वोत्प्रेक्षामात्रसिद्धं वस्तुजातमुद्दिश्योपवासप्रायकष्टैकमयेषु कर्मसु कथमात्मानं पातितवन्तः स्युः ? ईदृशस्य क्लेशस्यात्मनमपि पात्रीकृत्य परान् वञ्चयितुं प्रवृत्तानां किं नाम फलममितं स्यात् ?

इदमत्र कथनं युक्तिसंगतं भवेत् इदानीं यथा वयं तथैव प्रागपि सर्वे न जानन्ति स्म कदा कुत्र को वेदभाग आत्मानमाविश्चकारेति। वयमद्यत्वे नुभवामः यदाचार्यमुखेनाधीत्य वेदमधिगच्छन्तीति । एष एव क्रमस्सर्वदा बभूव । वेदोपबृंहणाय प्रवृतेष्वनल्पेषु पुराणप्रभृतिषु प्रबन्धेषु न क्वचिदवगच्छामः अयं पुरुष इदानीममुं वेदभागं चकारेति वचनम् । मन्त्रोच्चारणात् पूर्वं निर्दिश्यमानानि ऋषीणां नामानि बसिष्ठविश्वामित्रप्रभृतीन्युपलभ्य तत्रनिर्मितत्वं मन्त्राणामैतिहासिकरीत्यवलम्बिनोभिदध्युः परम्—ऋषिशब्दो न जातिवाची किन्तु दर्शनोपाधिकः। योऽवगच्छति सूक्ष्मानप्यलौकिकानर्थात् स ऋषिः।[१] यास्कादिकमहर्षीणामुत्यपेक्षयाधुनिकानामैतिहासिकरीत्यवम्बिनामुक्तौ प्रामाणिकत्वबुद्धिरयुक्तेत्युपरिष्टाद् निरूपयामः । पौरुषेयत्वं हि वेदस्य साधयितुमेदम्पर्यं बहन्तोऽपि नैयायिका अन्तत ईश्वरकर्तृकत्वमेव प्रतिपद्यन्ते । एवं प्रतिपन्ना अपि न ते सन्दिग्धा वेदस्य नित्यत्वे प्रामाण्ये वा । अयमेवाशः प्रमाणयति यत्सुबहोः कालात्पूर्वमपि वेदस्य ईश्वरादन्यो न कश्चित्कर्तृत्वेन मनसापि ध्यात इति,

---

सर्वलोकोत्तर एव, यः सर्वस्वदक्षिणया सर्वबन्धुपरित्यागेन सर्वसुखविमुखो ब्रह्मचर्येणतपसा श्रद्धया ना केवलं परवचनकुतूहली यावज्जीवमात्मनमवसादयति । कथंचैनमेकं प्रेक्षाकारिणोऽप्यनुविदध्युः केन वा चिह्नेनायमीदृशस्त्वया लोकोत्तरप्रज्ञेन प्रतारक इति निर्णीतः ? न ह्येतावतो दुःखराशेः प्रतारणसुखं गरीयः । यतः पाखण्डाभिमतेष्वप्येवं दृश्यते इति चेन्न । हेतुदर्शनादर्शनाभ्यां विशेषात् । अनादौ चैवम्भूतेऽनुष्ठाने प्रतायमाने प्रकारान्तरमाश्रित्यापि वहुविधव्यायासोपदेशमात्रेण प्रतारणा स्याद्, न त्वनुष्ठानगोचरेण कर्मणा । अन्यथा प्रमाणविरोधमन्तरेण पाखण्डित्वप्रसिद्धिरपि न स्यात् । वाक्यानि समालोचनमर्हन्ति ।

१. ऋषिर्दर्शनात् निरुक्त २-११

(अ) तद्यदेनांस्तपस्यमानाम् ब्रह्म स्वयम्भवभ्यानर्षतदृषयोऽ भवंस्तदृषीणामृषित्वमिति विज्ञायते ।

(आ) अजान् हवै पृश्नींस्तपस्यमानान् ब्रह्मस्वयम्भ्वभ्यानर्षत तदृषयोऽभवन् तदृषीणामृषित्वम् ।

तैत्तिरीय आरण्यक २-९-१.

अस्मिन् विषय ईश्वरस्यापि कर्तृत्वं सम्भवति न वेत्युपरिष्टाद्विवेचयिष्यामः ( )। कथं नाम शब्दसन्दर्भेण सता कर्तृसम्पर्कशून्येन भवितुं शक्यमिति वेदवाक्यानां भवत्याक्षेपः शब्दश्च नित्यश्चेति विषयोऽयं न तेषां बुद्धिमारोहति। तत्रालोच्यमाने कारणमेतत्स्यादित्यभ्यूहितुमस्त्यवसरः—यदिह लोके मनुष्योचितं यदावश्यकं साधारणवस्तुजातं तत्रैव केवलं चिराद्विरचितश्रमाणां तेषां मनुष्यजन्म पूर्वं भूतं पश्चाद्वा भावीति विषयं प्रति मनो व्यापारयितुं नासीत् कश्चनावसरः, नासीच्च कोऽपि निर्बन्धः, न वासीत्कोऽपि प्रमाणिकसम्प्रदायः। यदन्वहं ते प्रत्यक्षमीक्षन्त-एकैकं वस्तूद्भवति, क्रमेण च वर्धत इति।

अन्ततो नश्यतीति, तदेकवासनारूषितधियां तेषां नैव खलु प्रसक्तिः काचिदाविरासीत् नित्यमपि किमपि स्यादिति मनसि कलयितुम्। द्विविधाः खलु मानवाः दृश्यन्ते आहाराय जीवनमिति प्रपिपद्यमाना एके, जीवनायाहार इत्यपरे। तत्र प्रथमां कोटिमनुप्रविष्टा भवन्त्यवैदिकाः, द्वितीयांच कोटिं वैदिकाः। अवैदिकानां शरीरमिन्द्रियाणि च भौतिकानि पोषयितुं प्रवृत्तिः। वैदिकानान्तु मनसो बुद्धितत्त्वस्य पोषणे, इत्यस्ति भूयान् भेद उभयेषाम्। मत्यैवमवैदिकाः कुतः प्रवर्तेरन् अतीन्द्रियाणां विमर्षे ? शब्दो हि नाम किंचित्प्रमाणमस्तीत्येव ते नाभ्युपयन्ति, अपि च वेदस्यानित्यत्वमप्रामाण्यं च प्रसाधयितुं शब्दानेव लिखन्तीति विचित्रमिदम्। यदि वेदशब्दा अप्रमाणम् ? यदि ते वदेयुः—वेदस्य नित्यत्वमपौरुषेयत्वं वा वैदिकानां श्रद्धातिशयेन प्रामाण्याभिनिवेशेन वा सर्वविस्रम्भस्वभावेन वेति, तर्हि परेषामप्यवैदिकानां तस्यानित्यत्ववचनं पौरुषेयत्वप्रतिपादनं वा—अश्रद्धातिशयेन अप्रामाण्याभिनिवेशेन वा सर्वाविस्रम्भस्वभावेन वेति कथमिव न स्यात् ? अपौरुषेयत्वे किं प्रमाणमिति प्रश्ने सति, पौरुषेयत्वे प्रमाणाभाव एवेति सुवचत्वात्। वेदबाह्येभ्यो वैदिकं प्रमाणं दीयमानं न रोचेत इति तर्केनेमं विषयं परिशीलयामः—सम्प्रति जगति सर्वत्राशान्तिरसन्तोषश्च सर्वैरनुभूयत इति प्रत्यक्षं नस्समेषाम्। नैकविधान् नूतनान् विज्ञांनाविष्कारान् प्रत्यहमनुभवत्स्वपि जनेषु राष्ट्रेषु समाजेषु वा लेशतोपि सन्तोषस्य शान्तेश्च सम्पादनं कथमिव स्यादिति चिन्तातुरा एव प्रायशस्सर्व एव राष्ट्रसमाज-हितचिन्तकाः। प्रत्युत यावतीमेव विज्ञानाविष्कारो दैनन्दिनमेधमान उन्नतिं प्रयाति, तावत्येवासन्तोषस्याशान्तेश्च मात्राप्याधिकाऽनुभूयते लोकेषु। तस्मात्को वा उपायोऽवलम्बनीय इति विमर्शे प्राचीनानां पन्था एवानुसर्तव्य इत्यकामेनाप्यभ्युपगन्तव्यं भवति।

**न पर्यदेवन् विधवा न च व्यालकृतं भयम्।**
**न व्याधिजं भयं वापि रामे राज्यं प्रशासति॥**

निर्दस्युरभवल्लोको नानर्थः कश्चिदस्पृशत् ।
न च स्म वृद्धा बालानां प्रेतकर्माणि कुर्वते ।।

सर्वं मुदितमेवासीत् सर्वो धर्मपरोऽभवत् ।

ब्राह्मणाः क्षत्रिया: वैश्याः शूद्रा लोभविवर्जिताः ।
स्वकर्मसु प्रवर्तन्ते तुष्टाः स्वैरेव कर्मभिः ।।१०

इत्यादिनादिकविः भगवान् बाल्मकिः तदानीन्तनीं परिस्थितिं बोधयति । अस्याः परिस्थितेः प्रधानं मूलम्—यल्लोकानां धर्मपरा वृत्तिः । यावत्पर्यन्तं धर्मपरा वृत्तिरासीत् जनतायां राष्ट्रेषु समाजेषु वा, तावदेव खल्वासीत् सन्तोष-शान्त्यादीनामस्खलितं साम्राज्यम् । इतस्त्रिसहस्रवर्षेभ्यः पूर्वमपीयं परिस्थिति-र्लोकैरनुभूयते स्म । अधुना जडविज्ञानधारायाः प्रवाहेन सर्वत्राशान्तिरसन्तो-षश्च । परिवर्त्तनशीले संसारचक्रे क्रमेण यदा लोकानां धर्मपरावृत्तिरपचीयमाना-भवत् तत आरभ्यायमसन्तोषोऽशान्तिश्च । धर्मपराया वृत्तेरपि मूलं परलोक-भीतिः परिगण्यते स्म । अवैदिकानामाक्रमणेन नास्ति परलोको नास्तीश्वर इत्येवं निश्चितमतयो लोकाः धर्मप्रधानतां तिरस्कृत्य स्वयमशान्तिमसन्तोषं चानुभवन्तः कथं वा धर्मप्रधानतां तत्कार्यभूतां च सन्तोपशान्त्यादिवृत्ति सम्पाद-यितुमर्हन्ति ? परलोकभीतिः तत्कार्यभूता च धर्मपरावृत्तिः केनोपायेनाप्रामाण्य-ज्ञानानास्कन्दिनोत्पतुमर्हतीति विचिकित्सायां तथाभूतं प्रमाणरूपं समस्तदोषा-शङ्का कलङ्करहितवेदमेवोपस्थापयन्ति स्म प्राञ्चस्सुमतयः । तस्य च सम-स्तदोषाशङ्काराहित्यमपौरुषेयत्वसाधनेनैव सिध्येत् । तत्सिध्यर्थं प्राचीनैर्देशस्य समाजस्य च सुव्यवस्थितत्वसिद्धये समारोपितः मीमांसकैश्च संवर्धितो वैदिक-धर्मवृक्षो निर्मूल उत समूल इति विचारणीयम् । तत्र ऐतिहासिकरीतिपक्ष-पातिनो वैदिका एवमाशेरते—

आलङ्कारिकमर्यादानुसारेण नाटकादिषु सर्वत्रान्ते निर्वहणसन्धावद्भुता-र्थकामसमृद्धिरैहिकी कीर्तिश्च लोकोतरा फलत्वेनोपवर्ण्यमाना दृश्यते, न कुत्रापि स्वर्गप्राप्तिः मोक्षो वामुष्मिकं फलं निर्वहणसन्धौ वर्ण्यते । अभिनवगुप्ता-चार्यादीनां मतानुसारेण लोकोत्तरदृष्टफलकेष्वेव चरित्रेषु रसावहत्वं निश्चि-

---

१०. वाल्मीकि रामायणम्—युद्धकाण्डम् सर्ग १२८, श्लोकः—९९—१०४
भरतमुनिना सन्ध्यंगानां रसांगभूतमितिवृत्तप्राशस्त्योत्पादनमेव प्रयोजनमुक्तम् । न तु पूर्वरंगवददृष्टसम्पादनं विघ्नादिनिवाररणं वा
यथोक्तम्— इष्टस्यार्थस्य रचना वृत्तान्तस्यानपक्षयः ।
रागप्राप्तिः प्रयोगस्य गुह्यानां चैव गूहनम् ।।

आश्चर्यवदभिख्यानं प्रकाश्यानां प्रकाशनम् ।
अंगानां षड्विधं ह्येतद् दृष्टं शास्त्रे प्रयोजनम् ॥
—(धन्यालोकलोचनटीका पृः २४० भरतनाट्यशास्त्र २१ ५३)

मिति तादृशगुणबहुल एव विदग्धव्यवहारः समाजस्थितिहेतुस्सम्भवति । एवं विभावानुभावादिनिष्ठव्याप्तिसंस्कारस्यैव रसोद्बोधकताया आलङ्कारिकैः सिद्धान्तितत्वात् कार्यकारणभावमूलकतर्कस्यैव रसहेतुत्वं निर्गलितम् । तथैवेतिहासप्रसिद्धकथानामेव नाटके वर्ण्यमानतया साक्षिकथनस्यैव प्रत्यक्षमूलकस्य तस्य रसोद्बोधकत्वं निश्चीयते । तथा च प्रत्यक्षानुमानमूलिका कीर्तिकारी अर्थकामप्रधाना समाजव्यवस्थैव समाजस्य स्थितिहेतुर्भवितुमर्हति रसापकर्षकत्वादप्रकम्प्यत्वाच्च । तत्रार्थकामसमृद्धेः तत्कालानुवर्तमानानां सदाचाराणामवलम्बत्वेन सम्पद्यमानत्वे यद्यपि नास्त्येव परिवर्तनावश्यकता, तथापि यैस्सदाचारैः समाजस्यार्थकामयोर्हानिर्भवति तेषां परिवर्तनं समाजरक्षणार्थमवश्यं विधेयम् । एवं परिवर्त्तने लोकनिन्दयाः प्रसज्यमानत्वेऽपि सुधीभिराद्रियमाणं वस्तु कीर्त्तिकरं सम्पत्स्यत एवेति समाजव्यवस्था क्षुण्णा भवितुमर्हति । अतश्च काव्यानाटकादिवदैहिकफलान्यादायैव समाजिकव्यवस्थायामुपपन्नायां परलोकभीतिप्रयुक्ताया धर्मपराया वृत्तेः, तत्कार्यभूतायाश्च सन्तोषशान्त्यादिवृत्तेश्चावस्थापनम्, तत्र च प्रमाणं वेद इति कल्पनमनावश्यकमेवेति मीमांसकसंवर्द्धितस्य वैदिकधर्मवृक्षस्य निर्मूलत्वमेवेति ।

अत्र ब्रूमः—सत्यमर्थकामसमृद्धेः प्रत्यक्षानुमानमूलिकायाः रसाकर्षकत्वं सामाजिकाव्यवस्थापकत्वस्थापकत्वं च । किन्तु साऽर्थकामसमृद्धिः प्रत्यक्षानुमानाभ्यां धार्मद्वारेण सिध्यति । तथाहि—योगशास्त्रे प्रतिपादितास्वनेकासु विभूतिषु काचन विभूतिरस्तेयव्रतस्य तस्य प्रतिष्ठायां सर्वरत्नोपस्थानं[१२] फलम् । अत्र मनसापि स्तेयसंस्कारो यथा नोद्बुद्धो भवेत् तथा परिपाकः प्रतिष्ठा । इदं व्रतं सर्वरत्नोपस्थानं मे भवतु इतीच्छया यद्यारभ्यते तर्हि उद्देशमानसिकं स्तेयमापतिष्यति, प्रतिष्ठा च न सिध्येत् । अतो वक्तव्यं भवति—यत्तदनुष्ठानं धर्मोद्देशेन मोक्षोद्देशेन वा कर्तव्यमिति । तन्नानुषंगिकं सर्वरत्नोपस्थानं फलम् । एवमेव ब्रह्मचर्यप्रतिष्ठायां वीर्यलाभः फलम् इति योगशास्त्रे प्रशस्यमानं ब्रह्मचर्यव्रत-

---

१२. अस्तेयप्रतिष्ठायां सर्वरत्नोपस्थानं—साधनपादः । सूत्र-३७
अत्र भोजवृत्तिः—अस्तेयाभ्यासवतः फलमाह—अस्तेयम् यदाऽभ्यस्यति तदास्य तत्प्रकर्षान्निरभिलापस्यापि सर्वतो दिव्यानि रत्नानि उपतिष्ठन्ते ।

मपि[13] अतएव भगवानापस्तम्बाचार्यः—यद् यथा आम्रे फलार्थे सेसिच्यमाने छायागन्धश्चानुत्पद्येते एवं धर्मे चर्यमाणेऽर्था अनुत्पद्यन्ते इत्याह।[14]

**ऊर्द्ध्वबाहुर्विरौम्येष न च कश्चिच्छृणोति मे।**
**धर्मादर्थश्च कामश्च स किमर्थं न सेव्यते ॥**[15]

इति वदन् भगवान् वेदव्यासोऽपि धर्मपरामेव वृत्तिं द्रढयति, अर्थशास्त्रं कामशास्त्रं चामुमेवार्थं पुष्णीतः—

**व्यवस्थितार्थमर्यादः कृतवर्णाश्रमस्थितिः।**
**त्रय्या हि रक्षितो लोकः प्रसीदति न सीदति ॥**

इति चाणक्यो वदति।[16] वात्स्यायनः कामसूत्रकारोऽपि धर्मे विप्रतिपत्तिं सम्प्रतिपत्तिञ्च प्रदर्शयन् धर्ममूलत्वं वेदस्य सिद्धान्तयति—

न धर्मांश्चरेत्, एष्यत्फलत्वात्, सांशयिकत्वाच्च को ह्यबालिशो हस्तगतं परगतं कुर्यात् वरमद्य कपोतः श्वो मयूरात् वरं सांशयिकान्निष्कादसांशयिकः कार्षापणः इति लौकायतिकाः शास्त्रस्यानभिशङ्क्यत्वादभिचारानुव्याहारयोश्च क्वचित्फलदर्शनालक्षणचन्द्रसूर्यताराग्रहचक्रस्य लोकार्थबुद्धिपूर्वकमिव प्रवृत्तेर्दशनाद्वर्णाश्रमाचारस्थितिलक्षणत्वाच्च लोकयात्रायाः, हस्तगतस्य च बीजस्य भविष्यतः सस्यस्यार्थे त्यागदर्शनाच्चरेद्धर्मानिति वात्स्यायनः इति।[17]

कौटिल्योऽपि शास्त्रारम्भे विनयाधिकारं सन्निवेश्य राजनीतिं प्रति इन्द्रियजय-विद्यावृद्धसंयोगविद्याप्रचार-वर्णाश्रमधर्मव्यवस्थां मूलभित्तित्वेन वर्णयति।[18] नीतिसारकारोऽपि तमेव क्रममवलम्बमानः गुणास्सम्पत्तिहेतवः इति ब्रवीति। अत्र गुणपदं विवृणोति तट्टीकाकारः—

जितेन्द्रियत्वं विनयस्य लक्षणं गुणप्रकर्षो विनयादवाप्यते। गुणाधिके पुंसि जनोऽनुरज्यते जनानुरागप्रभवा हि सम्पदः इति।[19] वृणुते हि विमृश्यकारिणं

---

१३. ब्रह्मचर्यप्रतिष्ठायां वीर्यलाभः—साधनपादे अष्टत्रिंशं सूत्रम्।

१४. आपस्तम्ब।

१५. महाभारत।

१६. कौटिलीयार्थशास्त्रम्—विनयाधिकारिकं प्रथमाधिकरणम्—तृतीयोध्यायः।

१७. वात्स्यायनप्रणीते कामसूत्रे प्रथमाधिकरणे द्वितीयाध्याये त्रिवर्ग-प्रतिपत्तिप्रकरणम् २५-३१ सूत्राणि।

१८. कौटिलीयार्थशास्त्रस्य विनयाधिकारिकं द्रष्टव्यम्।

१९. प्रभावः शुचिता मैत्री त्यागः सत्यं कृतज्ञता।
कुलं शीलं दमश्चेति गुणाः सम्पत्ति हेतवः ॥
—कामन्दकीयनीतिसारे प्रथमं प्रकरणम्, प्रथमः सर्गः।

गुणलुब्धाः स्वयमेव सम्पदः इति भारविरपि ।[20] वात्स्यायनः कामसूत्रे धर्मलक्षणमलौकिकत्वाददृष्टार्थत्वादप्रवृत्तानां यज्ञादीनां शास्त्रात्प्रवर्तनम्: लौकिकत्वाद् दृष्टार्थत्वाच्च प्रवृत्तेभ्यश्च मांसभक्षणादिभ्यः शास्त्रादेव निवारणं धर्मः इति विदधानः तं श्रुतेर्धर्मज्ञसमवायाच्च प्रतिपद्यत इत्यादिना शास्त्रस्य श्रुतिरूपत्वमभिप्रैति ।[21] एवञ्च राष्ट्रस्य समाजस्य च हिताय प्राचीनैः प्रवर्तितानि-अर्थकामशास्त्राणि अपि प्राधान्येन धर्मतन्मूलभूतं वेदञ्च प्रतिपादयन्तीति धर्ममूलत्वं वेदस्य सर्वथा युक्तितर्कोपष्टब्धमित्यवैदिकैरैतिहासिकपद्धतिविद्भिरपि स्वीकर्तव्यमेवेति सिद्धम्।

किञ्च, काव्यनाटकादीनामैहिकफलवत्वं यदुक्तं तन्न तथा। सद्यः परनिर्वृतये[22] इति प्रयोजनं कथयन् मम्माचार्यस्तेषामलौकिकं फलं प्रदर्शयति। विश्वनाथोऽपि काव्येभ्यश्चतुर्वर्गफलप्राप्तिरति स्वीकरोति।[23] अभिनवगुप्ता-

---

२०. सहसा विदधीत न क्रियामविवेकः परमापदां पदम् ।
वृणुते हि विमृश्यमारिणं गुणलुब्धाः स्वयमेव सम्पदः ।
—किरातार्जुनीयम्—द्वितीयः सर्गः श्लोक—३० ।

२१. वात्स्यायनप्रणीते कामसूत्रे प्रथमाधिकरणे द्वितीयाध्याये त्रिवर्गप्रतिपत्ति प्रकरणम् ॥

२२. काव्यं यशसेऽर्थकृते व्यवहारविदे शिवेतरक्षतये ।
सद्यः परनिर्वृतये कान्तासम्मिततयोपदेशयुजे ॥
सकलप्रयोजनमौलिभूतं समनन्तरमेव रसास्वादनसमुद्भूतं विगलितवेद्यान्तरमानन्दं प्रभुसम्मितशब्दप्रधानवेदादिशास्त्रेभ्यः सुहृत्सम्मितार्थतात्पर्यवत्पुराणादीतिहासेभ्यश्च शब्दार्थयोर्गुणभावेन रसाङ्गभूतव्यापारप्रवणतया विलक्षणं यत्काव्यं लोकोत्तरवर्णनानिपुणं कविकर्म तत् कान्तेव सरसतापादनेनाभिमुखीकृत्य रामादिवद्वर्तितव्यं न रावणादिवदित्युपदेशं च यथायोगं कवेः सहृदयस्य च करोतीति सर्वथा तत्र यतनीयम् ।

काव्यप्रकाशे प्रथमोल्लासः कारिका—२ ।

२३. चतुर्वर्गफलप्राप्तिः सुखादल्पधियामपि ।
काव्यादेव यतस्तेन तत्स्वरूपं निरुप्यते ॥

किञ्च काव्याद्धर्मप्राप्तिः भगवन्नारायणचरणारविन्दस्तवादिना। "एकः शब्दः सुप्रयुक्तः सम्यग्ज्ञातः स्वर्गेलोके कामधुग्भवति" इत्यादि वेदवाक्येभ्यश्च सुप्रसिद्धैव। अर्थप्राप्तिश्च प्रत्यक्षसिद्धा। कामप्राप्तिश्च

चार्याणामिमानि वाक्यान्यत्र समालोचनमर्हन्ति—प्रभुसम्मितेभ्यः श्रुतिस्मृतिप्रभृतिभ्यः कर्त्तव्यमिदमित्याज्ञामात्रपरमार्थेभ्यः शास्त्रेभ्यो ये न व्युत्पन्नाः, न चाप्यस्येदं वृत्तममुष्मात्कर्मण इत्येवं युक्तियुक्तकर्मफलसम्बन्धप्रकटनकारिभ्यो मित्रसम्मितेभ्य इतिहासशास्त्रेभ्यो लब्धव्युत्पत्तयः, अथ चावश्यं लब्धव्युत्पाद्याः प्रजार्थसम्पादनयोग्यताक्रान्ता राजपुत्रप्रायास्तेषां हृदयानुप्रवेशमुखेन चतुर्वर्गोपायव्युत्पत्तिराधेया। हृदयानुप्रवेशश्च रसास्वादमय एव। स च रसश्चतुर्वर्गोपायव्युत्पत्तिनान्तरीयकविभावादिसंयोग प्रसादोपनत इत्येवं रसोचितविभावाद्युपनिबन्धे रसास्वादवैवश्यमेव स्वरसभाविन्यां व्युत्पत्तौ प्रयोजकमिति प्रीतिरेव व्युत्पत्तेः प्रयोज्ञिका। प्रीत्यात्मा च रसस्तदेव नाट्यं, नाट्यमेव वेद इत्यस्मदुपाध्यायः।[२४] अभिनवगुप्ताचार्याणां गुरूर्भट्टतौतः[२५] काव्यनाटकनिर्मातॄणां कवीनाम् ऋषीणां च तुल्यतां प्रतिपादयति—

**नानृषिः कविरित्युक्तमृषिश्च किल दर्शनात्।**
**विचित्रभावधर्मांशतत्वप्रख्या च दर्शनम्॥**
**स तत्वदर्शनादेव शास्त्रेषु पठितः कविः।**
**दर्शनाद्वर्णनाच्चाथ रूढा लोके कविश्रुतिः॥** इति।[२६]

अतश्चैवमादिभिः प्रमाणैः काव्यनाटकादीनामपि वेदवदलौकिकिर्थविदकत्वं सिध्यतीति ने तद्दृष्टान्तेन समाजस्यार्थकामप्रधाना वृत्तिर्व्यवस्थापयितुं शक्यते वैदिकैरिति सिद्धम्।

एवं प्रकृतसिध्यर्थायां चिन्तायामवसितायां वेदस्य स्वतःप्रामाण्यं व्यवस्थापयिष्यन्नहं तदौपयिकान् कांश्चन विषयान् सप्तभिः परिच्छेदैः प्रतिपादयितुमिच्छामि। तत्र प्रथमे—वेदस्वरूपम् द्वितीये-तदापौरुषेयत्वम्, तृतीये-प्रमाणलक्षणपरीक्षणम् चतुर्थे ज्ञानस्य प्रत्यक्षत्वानुमेयत्वे, पञ्चमे प्रमाणसंख्याविवादं षष्ठे ख्यातिभेदान्, सप्तमे च प्रामाण्यस्य स्वतस्त्वपरतस्त्वे च निरूपयामि।

---

अर्थद्वारैव। मोक्षप्राप्तिश्च एतज्जन्यधर्मफलाननुसन्धानात्, मोक्षोपयोगिवाक्ये व्युत्पत्याधायकत्वाच्च। चतुवर्गप्राप्तिर्हि वेदशांस्त्रेभ्यो नीरसतया दुःखादेव परिणतबुद्धीनामेव जायते, परमानन्दसन्दोहजनकतया सुखादेव सुकुमारबुद्धीनामपि पुनः काव्यादेव-साहित्य दर्पणप्रथमपरिच्छेदः।

२४. ध्वन्यालोकलोचन।

२५. विशेषस्तु अस्मद्गुरूचरणैः विद्यावाचस्पतिभिः पट्टाभिरामशास्त्रिभिः सम्पादितध्वन्यालोकादवगन्तव्यः पृष्ठ—१४-१५

२६. हेमचन्द्रकाव्यानुशासनम् पृष्ठ—३७६।

नमः परमात्मने

## प्रथमः परिच्छेदः

# वेद्स्वरूपविचारः

### (क) कोऽयं वेदो नाम

भारतीयास्सर्वेऽपि विमर्शकाः प्राचीना आधुनिकाश्च[1] वेदसन्दर्भमिति प्राचीनं मन्यन्त इत्यत्र न कापि संशीतिः। भगवान् मनुः—

**वेदोक्तमायुर्मर्त्यानामाशिवश्चैव कर्मणाम् ।**
**फलन्त्युनुयुगं लोके प्रभावाश्च शरीरिणाम् ॥[2]**

इति कथयन् अनुयुगं प्रवर्त्तमानं वेदमतिप्राचीनं वर्णयति। न केवलमयं वेदसन्दर्भः प्राचीततमः किन्तु जगत्स्रष्टुः भगवतः अवलम्बोऽपि अयं सन्दर्भः।[3]

---

१. After the latest researches into the history and chronology of books of Old Jestament, we may safely now call the Rgveda as the oldest book, not only of the Aryan Communi]y, but of the whole world,—The Teachings of the vedas by Rev. Morris Philo p. 104.

२. मनुस्मृति-अध्याय १ श्लोक ८४ पृष्ठ-२२।

३. सर्वेषां तु स नामानि कर्माणि च पृथक् पृथक् ।
वेदशब्देभ्य एवादौ पृथक्संस्थाश्च निर्ममे ॥

मनुस्मृति अ० १ श्लोव २१ पृ० ६

अत्र कुल्लूक भट्टः—सर्वेषां तु स नामानीत्यादि॥ स परमात्मा हिरण्यगर्भरूपेणावस्थितः सर्वेषां नामानि गोजातेगौरिति अश्वजातेरश्व इति। कर्माणि ब्राह्मणस्याध्ययनादीनि, क्षत्रियस्य प्रजारक्षादीनि। पृथक् पृथक् यस्य पूर्वकल्पे यान्यभवन्। आदौ सृष्ट्यादौ वेदशब्देभ्यः एवावगम्य निर्मितवान्। भगवता व्यासेनापि वेदमीमांसायां वेदपूर्विकैव जगत्सृष्टिर्व्युत्पादिता। तथा च शारीरिकसूत्रम्—शब्द इति चैवातः प्रभवात्प्रत्यक्षानुमानाभ्याम्। अस्यार्थः—देवतानां विग्रहवत्वे वैदिके वस्वादिशब्दे देवतावाचिनि विरोधः स्याद्वेदस्यादिमत्वप्रसंगादिति चेन्नास्ति विरोधः।

सर्वस्यापि पदार्थस्याविष्कारे समुत्पादने वा उपादानादिकारणान्तरेषु सत्स्वपि शब्दरूपं कारणं यदि न स्यात्तर्हि पदार्थानामाविष्कारः समुत्पत्तिर्वा न भवितुमर्हति । अत एव वाक्यपदीये भर्तृहरिः—

**न सोऽस्ति प्रत्ययो लोके यः शब्दानुगमाद् ऋते ।**[४]

इति कथयति ।

भगवान् भाष्यकारः शबरस्वामी अपि तस्मादवश्यमनेन सम्बन्धं कुर्वता अकृतसम्बन्धाः केचन शब्दाः वृद्धव्यवहारसिद्धा अभ्युपगन्तव्याः इति वर्णयन् अनादिसिद्धान् कांश्चन् शब्दान् अंगीकुर्वन् वेदसन्दर्भस्यातिप्राचीनतमत्वं व्यवस्थापयति ।[५]

सर्व्वैर्विमर्शकैः इदमङ्गीकृतं यत् काव्यदृष्टया वाल्मीकिरामायणम् आदिकाव्यम् आदिकविश्च भगवान् वाल्मीकिः । यः कविः पद्यमयं काव्यं यदा यया भाषया निर्माति तत्समये तस्याः भाषायाः सर्वत्रातिप्रचारेण विना स कविः तत्काव्यं निर्मातुं न प्रवृत्तो भविष्यतीति सर्वसम्मतः पन्थाः । रामायणञ्च काव्यं यदा समुत्पन्नम् ततः पूर्वं तस्याः भाषायाः कियान् प्रचार आसीत् इति सर्व्वैरेव विमर्शकैः अनुमातुं शक्यते किञ्च—

---

कस्मात् अतः शब्दादेव जगतः प्रभावादुत्पत्तेः प्रलयकालेऽपि सूक्ष्मरूपेण परमात्मनि देवराशिः स्थितः स इह कल्पादौ हिरण्यगर्भस्य परमात्मन-एव प्रथमदेहिमूर्तेर्मनस्यवस्थान्तरमनापन्नःसुप्तप्रबुद्धस्येव प्रादुर्भवति । तेन प्रदीप स्थानी येन सुरनरतिर्यगादिप्रविभक्तं जगदभिधेयभूतं निर्मिमीते । कथमिदं गम्यते प्रत्यक्षानुमानाभ्याम् । श्रुतिस्मृतिभ्यामित्यर्थः । प्रत्यक्षं श्रुतिरनपेक्षत्वात् । अनुमानं स्मृतिरनुमीयमानश्रुतिसापेक्षत्वात् । तथा च श्रुतिः—

एत इति प्रजापतिर्देवानसृजतासृग्रमिति मनुष्यानिन्दव इति पितृंस्तिरः पवित्रमिति ग्रहानाशव इति स्तोत्रं विश्वानीति शस्त्रमनि सौभगेत्यान्याः प्रजाः । स्मृतिस्तु सर्वेषां तु स नामानि इत्यादिका मन्वादिका मन्वादिप्रणीतैव । पृथक्संस्थाश्चेति । लौकिकीश्च व्यवस्थाः कुलालस्य घटनिर्माणं कुविन्दस्य पटनिर्माणमित्यादिकविभागेन निर्मिवान् ।।२१।।

४. न सोऽस्ति प्रत्ययो लोके यश्शब्दानुगमादृते ।
अनुविद्धमिव ज्ञानं सर्वं शब्देन गम्यते ।।
—भर्तृहरि, वाक्यपदीप ब्रह्मकाण्ड, १२३

५. शबरभाष्यम् अध्याय १ पाद १ अधिकरण ५ पृष्ठ—५७ ।

**वेदवेद्ये परे पुंसि जाते दशरथात्मजे,**
**वेदः प्राचेतसादासीत् साक्षाद्रामायणात्मना ।**[1]

इति वाल्मीकजन्ममुनिः कथयन् रामायणस्य वेदरूपत्वमवबोधयति । एतेनाऽपि वेदस्यातिप्राचीनतमत्वं सिद्धयति ।

**तस्य वेदस्य स्वरूपम्—**

**प्रत्यक्षेणानुमित्या च यस्तूपायो न बुध्यते ।**
**एनं विदन्ति वेदेन तस्माद्वेदस्य वेदता ॥**

प्रत्यक्षादिभिः प्रमाणैः यः पदार्थो नावगम्यते तदवगमसाधनभूतः वेद इति निरूपयन् याज्ञवल्कचः[2] शब्दस्य तदर्थस्य च वेदत्वमभिप्रैति । वेदभाष्यकर्त्ता सायणाचार्यः—

इष्टप्राप्त्यनिष्टपरिहारयोरलौकिकमुपायं यो ग्रन्थो वेदयति स वेदः इति वदति ।[3] वेदत्वं नाम धर्मः शब्दार्थोभियनिष्ठः न तु केवल शब्दनिष्ठः तदिदं मीमांसाशास्त्रस्य स्तम्भभूतः खण्डदेवाचार्यः भाट्टदीपिकायां व्यवस्थापयति ।[4] किन्तु रसगङ्गाधरकारः पण्डितराजजगन्नाथः काव्यलक्षण-विवरणावसरे शब्द-विशेषस्यैव काव्यपदार्थत्वं व्यवस्थापयन् एषैव च वेदपुराणादिलक्षणेष्वपि गतिः इति लिखन् शब्दविशेस्यैव वेदत्वमभिप्रैति ।[5] तदत्र निर्णयः अग्रे करिष्यते ।

**(ख) मन्त्रब्राह्मणयो र्वेदत्वम्—**

आपस्तम्बाचार्यः यज्ञपरिभाषासूत्रे मन्त्रब्राह्मणयोर्वेदनामधेयम् इति सूत्रयन् मन्त्रब्राह्मणसन्दर्भस्य वेदत्वमभिप्रैति इति ।[6] वेदार्थविचारं प्राधान्येन कर्त्तुं प्रवृत्तो भगवान् जैमिनिः वेदशब्देन किमभिप्रैति इति निरूपणं नाप्रासंगिकम् । मीमांसासूत्रकारो जैमिनिः तच्चोदकेषु मन्त्राख्या, शेषे ब्राह्मणशब्दः इति सूत्राभ्यां मन्त्रब्राह्मणयोस्स्वरूपं वदति ।[7] मन्त्रानधीमहे मन्त्रानध्यापयामः

---

१. वाल्मीकि रामायणम्—
२. यज्ञवल्क्य स्मृतिः—
३. सायणाचार्यः—तैत्तिरीय संहिता भाष्य भूमिका पृष्ठ-२ ।
४. खण्डदेवः—भाट्टदीपिका ।
५. जगन्नाथः—रसगंगाधर प्रथमाननम् पृष्ठ—६ ।
६. आपस्तम्बः—यज्ञपरिभाषासूत्रम् ।
७. जैमिनि—मीमांसा दर्शनम्, अध्याय २, पाद १ अधिकरण ७ सूत्र ३२-३३ ।

परिशेषन्यायेनावशिष्टस्य वेदभागस्य ब्राह्मणमिति संज्ञेति सूत्रयोरर्थः। अतो मन्त्राः वर्तन्ते इत्येवमभियुक्ताः शब्दसन्दर्भं मन्त्रत्वेनोपदिशन्ति स मन्त्रः, जैमिनिरपि मन्त्रब्राह्मणयोरेव वेदत्वमभिप्रैतीति ज्ञायते। शबरस्वामी मीमांसा-भाष्यकारः मन्त्राश्च ब्राह्मणञ्च वेदः इति वदन् सूत्राकारमेवानुसरति।[1]

किञ्च, अथातो धर्मजिज्ञासा इति प्रथमसूत्रेण जैमिनिः धर्मस्य जिज्ञासां प्रस्तौति। धर्मस्तु वेदार्थः इत्यत्र न कोऽपि संशयः। एवं वेदार्थजिज्ञासां प्रथममुपक्षिप्य तदनन्तरं द्वितीयसूत्रे चोदनालक्षणोऽर्थो धर्मः इति धर्मशब्दार्थ-स्य लक्षणं करोति। लक्षणस्थं चोदनापदं भाष्यकारः शबरस्वामी विवृण्वन्-चोदना इति क्रियायाः प्रवर्तकं वचनमाहुः। ··· तया यो लक्ष्यते, सोऽर्थः पुरुषं निःश्रेयसेन संयुनक्तीति प्रतिजानीमहे। चोदना हि भूतं, भवन्तं, भविष्यन्तं, सूक्ष्मं, व्यवहितं, विप्रकृष्टमित्येयं जातीयकमर्थं, शक्नोत्यवगमयितुं ··· ··· इत्यन्तेन भाष्येण शब्दसन्दर्भ-तदर्थं च वेदशब्दवाच्यमभिप्रैतीति विज्ञायते।[2]

वार्त्तिककारोऽपि—

**चोदनेत्यब्रवीच्चात्र शब्दमात्रविवक्षया।**
**न हि भूतादिविषयः कश्चिदस्ति विधायकः॥**[3]

इत्यादिना सन्दर्भेण धर्मस्य वेदार्थरूपत्वं मन्यते। प्रभाकरोऽपि धर्मजिज्ञासा-पदेन वेदार्थजिज्ञासां चोदनालक्षणोऽर्थो धर्मः इत्यत्र धर्मपदेन वेदञ्चाभिप्रैतीति स्पष्टं प्रतीयते।[4] माधवाचार्यः जैमिनीयन्यायमालायाम् वेदार्थस्यैव धर्मत्वं

---

१. शबरस्वामी—मीमांसा भाष्यम्, अध्याय २, पाद १ अधिकरण ७ सूत्र ३३ पृष्ठ-४३३।

२. शबरस्वामी—मीमांसा भाष्यम्, अध्याय १ अ० १ सूत्र २पृष्ठ-१३।

३. कुमारिलभट्ट (वार्तिककारः)—श्लोकवार्त्तिकम् २.७।

४. चोदनालक्षणसूत्रेण चोदनालक्षणः कार्यरूप एवार्थो न सिद्धरूप इति प्रतिज्ञातम्। तदनेन भाष्येण व्याख्यायते। धर्मशब्दश्च वेदार्थमात्र-परः

शालिकनाथः ऋजुविमलायाम्। (प्रभाकर-बृहति अ० १, पा० १, सू० २ पृ० १।

स्वीकरोति ।[1] पार्थसारथिमिश्रस्तु शास्त्रदीपिकायां प्राभाकराभिमतं वेदार्थस्य कार्यरूपत्वं निवारयन् धर्मशब्दास्यार्थं वेदार्थपरत्वमनङ्गीकृत्य शब्दस्यैव वेदशब्द-वाच्यत्वं व्यवस्थापयति ।[2]

## (ग) जैमिनीयं-मतम्

अत्रेदमालोच्यते— वेदवाक्यार्थान्विचारयितुं प्रवृत्तो मीमांसासूत्रकारो जैमिनिः वेदस्य निष्कृष्टं स्वरूपमनभिधाय मन्त्राणां

ब्राह्मणानाञ्च पृथक्पृथक्तत् किमिति सूत्रयति ? मन्त्रब्राह्मणस्वरूपकथनप-रमिदं सूत्रद्वयं द्वितीयाध्यायस्य प्रथमपादे विधिमन्त्राधिकरणानन्तरं विद्यते । द्वितीय प्रथमस्यादौ प्रधानकर्मणां गुणकर्मणाञ्च स्वरूपमभिधाय स्तोत्र-शस्त्राणां मन्त्राणां प्रधानकर्मस्वन्तर्भाव उत गुणकर्मस्विति विचार्य प्रधान-कर्मत्वमेव तेषामिति सिद्धान्तयित्वा, अनंतरं विधिमन्त्रयोरैकार्थ्यमेकशब्दात् इति विधिमन्त्राधिकरणपूर्वपक्षसूत्रेण विधिगतानामाख्यातानां यथा विधाय-कत्वं तथैव मन्त्रगतानामपीति पूर्वपक्षयित्वा, अपि वा प्रयोगसामर्थ्यान्मन्त्रो ऽभिधानवाचीस्यात् । इत्यनेन मन्त्रस्याभिधायकत्वमेव न तु विधायकत्वमिति सिद्धान्तितम् । तत्र मन्त्रः कः ? विधिश्च कः ? इति जिज्ञासायां सूत्रद्वयमिदं प्रवृत्तम् । समष्टिरूपेण वेदस्वरूपप्रतिपादनप्रसक्तिरेव नासीज्जैमिनेः । मीमांसायां विरचितान्यधिकरणानि परस्परं संगतानि भवन्ति । पूर्वस्योत्तरेणा-धिकरणेन सहावश्यं संगतिर्वाच्या भवति । अतस्तादृशी संगतिर्वेदशब्दार्थ-निरूपणाय न प्रसक्ता । किन्तु जैमिनिसूत्रेभ्यो वेदपदार्थस्स्पष्टमवगन्तुं शक्यते । तथाहि—

प्रथमाध्यायस्य तृतीये पादे लोकवेदाधिकरणे य एव लौकिकाः शब्दा स्त एव वेदेऽपि, य एव लोके शब्दानामर्थाः त एव वेदेऽपि इति लौकिकवैदिकपद पदार्थानन्यत्वं जैमिनिः औत्पत्तिकस्तु शब्दस्यार्थेन सह सम्बन्धः तस्य ज्ञानमुप-देशः इति सिद्धान्तयन् पञ्चमसूत्रस्थोपदेशशब्दस्य किञ्चिद्वैशिष्ट्यं स्वीकरो-

---

१. अथातो धर्मजिज्ञासेत्यत्राथशब्देन कृत्स्नवेदाध्ययनानन्तर्यमुच्यते । अतश्शब्देन कृत्स्नस्य वेदस्य विवक्षितार्थत्वं हेतूक्रियते । उक्तशब्दद्वया-नुसारेण धर्मशब्दोऽपि कृत्स्नं वेदार्थमाचष्टे । ततः सूत्रे वेदार्थो जिज्ञास्य इति प्रतिज्ञा कृता । जैमिनीयन्यायमाला-प्रथमोऽध्यायः धर्मलक्षणाधिकर-णम् पृ० १७ ।

२. पार्थसारथिमित्र—शास्त्रदीपिका पृ० १५-१८ ।

तीति प्रतीयते शबरस्वामी उपदेशपदं विवृण्वानो वदति— उपदेश इतिविशिष्टस्य शब्दस्योच्चारणम् इति । किं तद्वैशिष्ट्यं शब्दस्य ? यश्शब्दराशिः अलौकिकमर्थमावेदयन् नियतस्वरवर्णक्रमविशिष्टः गुरुमुखोच्चारणानूच्चारणैकप्राप्यश्च शब्दराशिः स एव वेदपदार्थः । शब्दराशेरिद विशेषणत्रयं जैमिनिस्स्वयमभिप्रैति चोदनालक्षणोऽर्थो धर्मः इत्यत्र चोदनापदं शब्दराशेरलौकिकार्थवेदकत्वं ज्ञापयति । एव मन्त्राधिकरणे जैमिनिः 'वाक्यनियमात्' इति सूत्रेण मन्त्राणामविवक्षितार्थत्वे नियतानुपूर्वीकत्व हेतुरिति पूर्वपक्षयित्वा—'अविरुद्धं परम्' इति सिद्धान्तसूत्रेण वेदस्य नियतस्वरवर्णक्रमविशिष्टत्वस्य स्वीकारेऽपि विवक्षितार्थत्वे कापि हानि र्न भवतीति बोधयन् वेदस्य नियतस्वरवर्णक्रमविशिष्टत्वं प्रतिपादयति । एव स्वाध्यायोऽध्येतव्यः[1] इत्यध्ययनविधेः संस्कारविधित्वं नियमविधित्वञ्च मीमासकैस्सिद्धान्तितम् संस्कारश्चाप्तत्वरूप । स च संस्कारः गुरुमुखोच्चारणानूच्चारणव्यापारसाध्यः । स एव व्यापारः अधिपूर्वकेङ् धातोरर्थः । तथा च गुरुमुखोच्चारणानूच्चारणरूपाध्ययनेन स्वाध्यायः—स्वकुलपरम्परागता शाखा अवाप्तव्या इति विधिवाक्यार्थस्सलक्ष्यते । अतश्च जैमिनिमतेन नियतस्वरवर्णक्रमविशिष्टत्वे सति गुरुमुखोच्चारणानूच्चारणव्यापारैकप्राप्यत्वे च सति अलौकिकार्थवेदकत्ववेदस्य स्वरूपमिति निर्गलितम् । तदिद स्वरूपं मन्त्रब्राह्मणोपनिषदारण्यकारानुगतम्, सर्वत्रैव पूर्वोक्तविशेषणानां सत्वात् । इदमेव जैमिनेर्मतम् ।

---

१. अस्यार्थः—स्वस्य अध्यायः स्वाध्यायः । अत्र स्वशब्दः आत्मकुलपरम्पवाचकः । अध्यायशब्दश्शाखावच्छिन्नवेदपरः । अध्येतव्य इत्यत्र अधिपूर्वकेङ् धातोरध्ययनमर्थः । अध्ययनं नाम गुरुमुखोच्चारणपूर्वकशिष्यानूच्चारणम् । तव्यप्रत्ययस्य लक्षणया आर्थीभावना अर्थः । तस्याञ्चार्थीभावनायां स्वाध्यायस्य कर्मत्वेन अध्ययनस्य करणत्वेन चाऽन्वयः । तथा च अध्ययने गुरुमुखोच्चारणानूच्चारणेन स्वाध्यायं स्वकुलपरम्परागतैकशाखावच्छिन्नं वेद भावयेत् प्राप्नुयादिति श्रुतिशाब्दबोधः ।
—जैमिनीय न्यायमाला टिप्पणी

## द्वितीयपरिच्छेदः

# वेदापौरुषेयत्वविचारः

### (क) वेदे त्रेधा पुरुषानुप्रवेशसम्भावना तन्निरसनञ्च

त्रेधा नाम सभाव्यते शब्दानां पुरुषः सम्बन्धः—वृद्धिपदस्य वर्णविशेषेषु पाणिनेरिव पदपदार्थसकेतद्वारा, पदैः पदार्थमात्रप्रतिपादनेऽपि पदार्थानां परस्परसंसर्गरूपवाक्यार्थे वाक्यस्य संकेतद्वारा, भारतादौ व्यासादेरिव शब्दसन्दर्भसन्दब्धत्वेन वा। तत्र शब्दानामर्थानाञ्च प्रत्याय्यप्रत्यायकरूपसम्बन्धः स्वतस्सिद्धः सर्वदातनश्चेति औत्पत्तिकसूत्रेण कथयन् महर्षिर्जैमिनिः तदंशे पुरुषः सम्बन्धापेक्षां निरस्यति। युक्तञ्चेदम्—घटशब्दः कम्बुग्रीवादिमदर्थस्य प्रत्यायकः, कम्बुग्रीवादिमांश्च घटशब्दस्य प्रत्याय्यप्रत्यायकभावस्सम्बन्धः शब्दार्थयोर्वाच्यः। एवं सम्बन्धं कुर्वता पुरुषेण केनचिच्छब्देन कर्त्तव्यो भवति। येन शब्देन क्रियते सम्बन्धः, तस्यार्थेन सह सम्बन्धः केन कृतः। शब्दान्तरेणेति चेदव्यवस्था स्यात्। अतः सम्बन्धं कुर्वता पुरुषेणानादितो वृद्धव्यवहारसिद्धा अकृतसम्बन्धाः शब्दा एष्टव्या एव भवेयुः। एतादृशो वृद्धव्यवहारश्चेदस्ति न तर्हि नियोगतः सम्बन्धा केनचन भवितव्यमित्यायाति। 'न कदाचिदनीदृशं जगत्' इति न्यायेन शब्दव्यवहाररहितं जगदासीदिति न साधयितुं शक्यम्। प्रलयानन्तरं सृष्टेः प्राक् स काल आसीदिति चेत्—न, प्रलयः खलु जगतो भवति स्म। प्रलयात्प्राग्जगति यादृशो वृद्धव्यवहार आसीत्, तादृश एव सृष्टेरूर्ध्वमपि। यः कल्पस्स कल्पपूर्वः इति हि न्यायः। विकासवादिनः काममिदमभ्युपगच्छेयुः—यद्वानरादात्मन उत्पत्तिम्, न पुनरस्मभ्यं स पन्था रोचते। ऐतिहासिकदृशापि यदि विवेचयामः तर्हीदं प्रसिध्यति यच्चिरन्तनोऽयं वृद्धव्यवहार इति। आ च हिमवतः आच कुमारिकायाः तीर्थस्थानेषु लोकैरुच्चार्यमाणे संकल्पवाक्ये दृष्टिर्निपात्यतां कियतः प्राचीनात्कालादस्माकमितिहासः प्रवृत्त इति स्पष्टं विज्ञायेत—

ओं तत् सत् श्री ब्रह्मणो द्वितीयप्रहरार्द्धे वैवस्वतमन्वन्तरेऽष्टाविंशतितमे कलियुगे कलिप्रथमचरणेऽमुकसम्वत्सरेऽमुकायन — — ऋतु — — मास — — पक्ष — — दिन — — नक्षत्र — — लग्न — — मुहूर्ते —

## १—पदपदार्थसम्बन्धद्वारा पुरुषसंम्बन्धाभावः

किञ्च, पदपदार्थसम्बन्धकर्त्ता किमेक इष्यते ? उत बहव इष्यन्ते कर्त्तारः ? प्रथमः पक्षश्चेत् स कुतो न स्मर्यते जनैः ? वृद्धिशब्देन आदैचौ बुध्यमानाः पाणिनिं न केऽपि विस्मरन्ति, मकारेण सर्वगुरुमवगच्छन्तः पिंगलाचार्यं न कोऽपि विस्मरति । अतस्सम्बन्धकर्त्तावश्यं स्मर्त्तव्यः न च स्मर्यत च इति स नास्तीत्येव सिध्यति । यदि द्वितीयकल्पः, शब्दार्थव्यवहार एकरूपो न सिध्येत् । अतो न पदपदार्थसम्बन्धद्वारा वेदेषु पुरुषानुप्रवेशः ।[1]

---

१. या तद्बहिरवस्थानाद्वेदरूपं न दृश्यते ।
ऋक्सामादिस्वरूपे नु दृष्टे भ्रान्तिर्निवर्तते ।।
आदिमात्रमपि श्रुत्वा वेदानां पोरुषेयता ।
न शक्याऽध्यवसातुं हि मनागपि सचेतनैः ।।
दृष्टार्थव्यवहारेषु वाक्यैर्लोकानुसारिभिः ।
पदैश्च तद्विधैरेव नराः काव्यानि कुर्वते ।।
प्रपाठकचतुःषष्टिनियतस्वरकैःपदैः ।
लोकेष्वप्यश्रुतप्राये ऋग्वेदं कः करिष्यति ।।
अग्निमीले पुरोहितं यज्ञस्य देवमृत्विजम् ।
होतारं रत्नधातममित्येनन्नृवचः कथम् ।।
किमालोच्य क्व वा दृष्ट्वा वाक् प्रतिच्छन्दमीदृशम् ।
रचयेत्पुरुषो वाक्यं किं चोद्दिश्य प्रयोजनम् ।।
अग्नेः पुरोहितत्वं च क्व दृष्टं येन कीर्त्यते ।।
ईलेशब्दप्रयोगश्च क्व दृष्टस्तोत्र गोचरः ।
देवस्य चास्य यज्ञस्य प्रतिकर्मावधार्यते ।
न जात्या देवतात्वं हि क्वचिदस्ति व्यवस्थितम् ।।
होतृत्वमपि यत्तस्य देवताह्वानहेतुकम् ।
रत्नधायितमत्वं च तन्नरैर्ज्ञायते कथम् ।।
अविज्ञातगुणानां च कल्पते स्तवनं न तु ।
स्वतन्त्रो वेद एवैतत्केवलो वक्तुमर्हति ।।
इषेत्वेत्ययमप्यर्थः पुरुषेणोच्यतां कथम् ।
शाखाच्छेदोपयोगश्च पुंभिरुत्प्रेक्ष्यतां कुतः ।
एवमूर्जेत्ययं मन्त्रः केन शाखानुमार्जने ।
वक्तुं शक्यो नियोक्तुं वा बुद्धिपूर्वककारिणाम् ।।

## २—वाक्यवाक्यार्थद्वारा सम्बन्धाभावः

वाक्यवाक्यार्थद्वारा संबन्धस्त्वभिहितान्वयवादिभिर्न स्वीक्रियते । अनन्यलभ्यश्शदार्थः इति हि न्यायः । वाक्येभ्यो वाक्यार्थबुद्धौ न पृथकसंकेतो पेक्ष्यते । पदेभ्यः पदार्थेष्ववगतेषु तेषामाकांक्षासन्निधियोग्यतावशेनैव मिथस्संसर्गविशेषो वाक्यार्थाभिधानोऽवगम्यते । अतो वाक्यवांक्यार्थसम्बन्धद्वारापि न वेदेषु पुरूषानुप्रवेशः ।

## ३—ग्रन्थप्रणयनद्वारासम्बन्धाभावः

नापि तृतीयविधया वेदेषु पुरूषसम्बन्धः । तत्र किं काठकं कालापकं कौथुममिति पुरुषसम्बन्धं निमित्तीकृत्य माथं माधवीयमित्यादिवत्समाख्यायमानत्वात् कर्तृत्वसम्बन्धं विना पुरुषशब्दसन्दर्भयोरन्यादृशस्य सम्बन्धस्यानुपपत्तिरिति वेदस्य पौरूषत्वे हेतुस्सम्भाव्यते ? उतानित्यानामाधुनिकानां पुरुषाणां देशानां नदीनां पर्वतादीनां वा वेदे कीर्तनात् तादृशपुरुषादिप्राक्काले भूतत्वं वेदस्यावगमयतीति पौरूषेयत्वे हेतुरसम्भाव्यते ? आहोस्वित् वेदःपौरूषेयः वाक्यत्वात् भारतादिवाक्यवदित्यनुमानेन वा सम्भाव्यते ? तत्राद्यं हेतुं सूत्रकार एव 'आख्या प्रवचनात्' इति सूत्रेण निरास ।[1] प्रकर्षेण वचनमनन्यसाधारणं कठादिभिरनुष्ठितम्, अतः काठकमित्याख्या । द्वितीयः पुनर्वेदपौरुषेयत्वहेतुस्सूत्रकारेण परन्तु श्रुति-

---

वायवः स्थेत्ययं मन्त्रो वत्सापाकरणं प्रति ।
एकशो विनियोक्तव्य इति कः कथयिष्यति ।।

वायुशब्देन बहुवचनान्तेन मातुर्वियोज्यमान एकैको वत्सोऽभिधीयत इति नैतद्बुद्धिपूर्वकारिणा चिन्तयितुं शक्यम् ।

सामवेदे चवोग्नाई प्रभृतीनां प्रयुज्यते ।
रूपं तत्रापि पौंस्नत्वं नाभिप्रायोऽस्ति कश्चन ।।

को नाम बुद्धिपूर्वकारी पुरूषोर्थाभिधानपराणामृगक्षराणां लोकव्याकरणादिष्वनवगतपूर्वमग्न इत्यस्य पदस्याकारमोकारेण प्लुतेन विकुर्यात् ।

तथा वीतय इत्यस्मिन्नीकारस्यापि विक्रियाम् ।
त शब्दस्य च तो शब्दं ये शब्दस्यापि रूपताम् ।।
को मूढो बुद्धिपूर्वो वा नियमात्कल्पयिष्यति ।
तेन वेदस्वतन्त्रत्वं रूपादेवागम्यते ।।
किंचिदेव तु तद्वाक्यं सदृशं लौकिकेन यत् ।
तत्रापिच्छान्दसी मुद्रा दृश्यते सूक्ष्मदर्शिभिः ।।

—तन्त्रवार्त्तिकम् पृ० ३३७-३८

१. मीमांसादर्शनम्, अ० १, पा० १ अ० ८ सू० ३० पृष्ठ-१०२ ।

सामान्यमात्रम् इत्यनेन परिजह्रे ।[२] सूत्रस्येदं तात्पर्यम्—अर्थानुसारिणश्चार्था इति प्रकारद्वयमनुभूयते । तत्र वेदेषूपलभ्यमानाः पुरुष-देश-नदी-पर्वतादिबोधकाश्शब्दाः नार्थानुसारिणः, किन्त्वेतच्छाब्दानुसारिण एवार्थाः कल्पनीयाः । यथा—गणिताध्यापकः कश्चन छात्रानध्यापयन्-'अ' पदाभिधेयः पञ्चदशनिमेषैः क्रोशमेकमतिक्रामति, 'व' पदाभिधेयः दशभिर्निमेषैरेक योजनमतिक्रामति चेत् 'व' पदाभिधेयः दशभि र्निमेषै कियद्दूरं गच्छति इत्यादीन् शब्दान्ब्रवीति । एतेषा शब्दानां नार्थानुसारित्वम्, किन्तु शब्दानुसारेणैव प्रकृतगणितसम्बन्धी-श्रुतिसामान्यमात्रः कश्चनार्थः परिकल्पनीयः । तथैव वेदेषु यत्र यत्र पुरुषदेशादयः शब्दाः तत्र तत्र न तेषामर्थानुसारित्वम् अपि तु श्रुतिसामान्यमात्रम् इति तेषां गतिः कल्पनीयेति ।

एव वेदस्य पौरुषेयत्वे हेतुतया शङ्क्यमानयोस्समाख्यानानित्यदर्शनयोरन्यथासिद्धौ वर्णितायामपि केषाञ्चनैवं शकाविभ्रमस्स्यात् यच्छब्द सन्दर्भस्यावश्यमेव केनचिन्निर्मात्रा भवितव्यमिति सामान्यत कर्तरि सम्भाविते तदानुगुण्येन च समाख्यानादावुपपद्यमाने कःचिदेषा कुसृष्टिर्वैदिकानामिति । तत्राप्याह जैमिनिः—उक्तन्तु शब्दपूर्वत्वम् इति ।[3] सर्वेषामध्येतॄणा वेदोच्चारणप्रवाहस्य पूर्वपूर्वोच्चारणरूप शब्दपूर्वत्वमुक्तमिति सूत्रार्थ ।

### (ख) वेदस्य पौरुषेयत्वसाधनानुमानविमर्शः

सम्प्रति वेदस्य पौरुषेयत्वसाधक परैः प्रयुज्यमान परिशीलयामः । वेदः पौरूषेयः वाक्यत्वाद् भारतादिवत् इति प्रयोगश्रवणमात्रेण वेदस्य पौरूषेयत्व सिद्धमिति भाति, तथाप्ययमनुमानाभास एव । पञ्चम्यन्तप्रयोगमात्रेण सर्वमेवानुमानं न हि यथार्थत्वेनाभ्युपगन्तुमुचितम्, एव सति हि गोमयं पायस गव्यत्वात् क्षीरवत् स्वस्त्री अगम्या स्त्रीत्वात्, परस्त्रीवत् इत्यादीन्यप्यनुमानानि स्वीकर्तुमुचितानि भवेयुः । अतो यत्र साध्यहेत्वोः व्याप्तिसम्बन्धस्य दृढतमत्व तादृशान्येवानुमानानि हेत्वाभासरहितानि स्वीकर्तुमुचितानीति सर्वतार्किकसिद्धान्तः । मीमांसकास्तु यत्र साध्यास्तित्वप्रयुक्तमेव हेत्वस्तित्वं भवति यथा वह्निधूमयोः, तादृशस्सम्बन्ध एव व्याप्तिपदार्थ इति वर्णयन्तस्तार्किकाणामेव पूर्वोक्त सिद्धान्तं द्रढयन्ति ।

पूर्वोक्तेषु गोमयं पायसमित्याद्यनुमानाभासेषु कुत्रापि हेतुसत्ता साध्यास्तित्व प्रयुक्तेति वक्तुं न शक्यते । तथाहि—योगसाधारणःक्षेमसाधारणश्चेति कार्यकारणभावस्य द्वैविध्यं शास्त्रेषु परिदृश्यते । अप्राप्तस्य प्रापण योगः, लब्धस्य च परिरक्षण क्षेमः । यथा शरीरस्य योगकारणमदृष्टमातापित्रादि,

---

२. मीमांसादर्शनम् सू० ३१ पृष्ठ-१०२ ।

३. " " सू० २९ पृष्ठ-१सू१ ।

क्षेमकारणञ्चाहारभैषज्यादि प्रकृते प्रथमानुमाने हेतुभूतस्य गव्यत्वस्य सत्ताया पायसत्वस्यसत्तोभयथापि कारण न भवति । अतस्साध्यास्तित्वप्रयुक्त हेत्वस्तित्व तत्रेति वक्तु न शक्यते । एवमेव द्वितीयानुमानेऽपि । तथाचोक्तविधकार्यकारणभाव-तर्कशून्येषु तेषू व्याप्तेरेवादृढत्वादाभासत्व तावन्निर्विवाद दार्शनिकानाम् ।

वेदपौरूषेयत्वानुमानेऽपि सैव दशा दृश्यते । तथाहि पौरुपेयत्व नाम न येन केनचित्पुरुषेणोच्चार्यमाणत्वमेव । तथासत्यस्माभिरुच्चार्यमाणस्य रघुवशादेः काव्यस्याप्यस्मत्प्रणीतत्व स्यात् । किन्तु यत्पुरुषीयाद्योच्चारणविपयत्वं यत्र तत्र तत्पुरुषनिर्मितत्वम् । उच्चारणे आद्यत्वञ्च स्वसजातीयोच्चारणनिरपेक्षत्व-रूपम्। तथा च स्वसजातीयोच्चारणनिरपेक्षोच्चारणविषयत्वमेव पौरुषेयत्वमिति पौरुषेयत्वानुमागे साध्यस्वरूपपरिष्कारस्सम्पन्न । हेतुभूत वाक्यत्व नाम-तच्च वाक्य स्याद्योग्यताकांक्षासत्तियुक्तः पदसमुच्चय इत्युक्तिमनुसृत्य आकाक्षायोग्यता-सन्निधिमत्पदकदम्वत्वम् । एवंविधस्य विशिष्टपदसमूहत्वरूपहेतोरस्तित्व पदसमू-होच्चारयितु कस्य चित्पुरुषस्यासत्वे यद्यपि न सम्भवेत्, तथापि स्वसजाती-योच्चारणनिरपेक्षत्वमुच्चारणस्य तादृग्हेत्वस्तित्वकारणमिति नैव शक्यते वक्तुम् । तादृशनिरपेक्षोच्चारण विनापि-अस्मदादिभिरद्यत्वेऽध्याप्यमानैर्बा-लकैरूच्चार्यमाणे रघुवशादिकाव्ये पूर्वोक्तनिरपेक्षोच्चारणं विनाप्युपपद्यमान-वाक्यत्व प्रतिनिरपेक्षोच्चारणस्य कारणात्वाभावस्यैव सिद्धेः, पौरुषेयत्वानु-माने साध्यास्तित्वप्रयुक्त हेत्वस्तित्वमित्येव वक्तुमशक्यत्वेन व्याप्तेरदृढतया नुमानस्य शिथिलमूलत्वाद् अनुमानाभासत्वस्यैव सिद्धे. ।

## (ग) विध्यर्थबलादपि वेदस्यापौरुषेयत्वसिद्धिः

### १—विध्यर्थे नव्यप्राचीनतार्किकमतम्—

किञ्च, वेदापौरूषेयत्व हेत्वाभासरहितैस्तर्कैरेव तावत्सिध्यति । तथा हि—विधिनिषेधयोः कस्तावदर्थं इति विमृश्यमाने प्रवृत्तिनिवृत्ति हेतुभूतज्ञान-विषयः कश्चिदिति तावद्विवाद । तत्र नवीनतार्किकाः—

बलवदनिष्टाननुबन्धित्व-कृतिसाध्यत्वविशिष्टेष्टसाधनत्वज्ञानस्य प्रवृत्ति-कारणतया अन्वयव्यतिरेकाभ्यां सिद्धत्वात्प्रवृत्तिकारणीभूततादृशज्ञानस्य विष-यीभूतो वलवदनिष्टाननुबन्धित्वकृतिसाध्यत्वविशिष्टेष्टसाधनत्वरूप एव विध्यर्थ इति साधयन्ति । उदयनाचार्यप्रभृतयस्तु प्राचीनतार्किका. आप्ताभिप्रायो विध्यर्थ इति वर्णयन्ति ।

अयमाशयस्तेषाम्—

बलवदनिष्टाननुबन्धित्वकृतिसाध्यत्वविशिष्टेष्टसाधनाताज्ञानमन्वयव्यतिरे-काभ्या प्रवृत्ति प्रति साक्षात्कारणमित्यत्र यद्यपि न कश्चिद्विवादः तथाप्या-

प्ताभिप्रायस्यापि प्रवृत्तिकारणत्वं परम्परया स्वीकर्त्तव्यम् । तथाहि—वत्स पठ इति पितुराज्ञां श्रुतवान् सुधीर्बाल: पठन पूर्वोक्तेष्टसाधनत्ववत् मत्कर्तव्यतया मदीयाप्ताभिप्रायविषयत्वात् यत्कर्त्तव्यतयायदीयाप्ताभिप्राय-विषयत्व यत्र यत्र, तत्र तत्र तदीयबलवदनिष्टाननुबन्धित्वकृतिसध्यत्वविशिष्टेष्ट-साधनत्वमिति व्याप्तेः, आप्तत्वन्तु भ्रम-प्रमाद-विप्रलिप्साकरणापाटवरूप-दोषचतुष्टयरहितत्वमेवात्र विवक्षितम्, तेन भ्रान्तपित्रादिकृताज्ञाया न व्यभिचार इत्यादिरीत्या पठने कार्ये विशिष्टेष्टसाधनत्वमनुमिन्वान: पठने प्रवर्तते । अतः विशिष्टेष्टसाधनताज्ञानस्य प्रवृत्तिहेतुत्व विवादेऽपि पूर्वोक्तानुमितिरूपे तादृशज्ञाने हेतुभूतं ज्ञानमाप्ताभिप्रायज्ञानमेव भवति । तच्च पूर्वोक्तानुमितिद्वारा प्रवृत्ति प्रतिकारणं सम्पन्नमिति परम्परया प्रवृत्तिकारणी-भूत-तादृशाभिप्रायज्ञानविषयी-भूतः पूर्वोक्ताप्ताभिप्रायोऽपि प्रवृत्तिहेतुज्ञानविषय एवेति विध्यर्थो भवितुमर्हतीति सिध्यति ।

तत्र अनन्यलभ्यः शब्दार्थ इति न्यायेनाप्ताभिप्रायस्य विध्यर्थत्वाभ्युपगमे तद्बलेनेष्टसाधनत्वादिक नव्यतार्किकाभिमतमनुमानेन लब्धु शक्यमिति तदन्य-लभ्यं भवति । नव्यतार्किकमतस्वीकारे प्राचीनाभिप्रेतआप्ताभिप्रायरूपो अर्थः कथमपि लब्धुं न शक्यते । न हि विशिष्टेष्टसाधनत्वहेतुना आप्ताभिप्रायोऽनुमातु शक्यते, बहूनामिष्टसाधनाना कार्याणा स्वयमेवेष्टसाधनत्व गृहीत्वानुष्ठीयमानाना विषये ज्ञानगन्धेनापि रहितानामाप्ताना दर्शनेन तादृशस्थले आप्ताभिप्रायस्यापि वक्तुमशक्यत्वेनेष्टसाधनत्वादेराप्ताभिप्रायेण सहानैकान्त्यात् । तथा च प्राचीना-भिप्रेतएवार्थोऽनन्यलभ्यः, नव्याभिप्रेतस्त्वन्यलभ्य इति आप्ताभिप्रायो विधेरर्थ इति सिद्धम् ।

**२—विध्यर्थे मीमांसकमतम्—**

स एवाभिप्रायः प्रवृत्तिहेतुज्ञानविषयत्वात्प्रवर्त्तनेत्युच्यते । कार्यस्य भवितुः प्रवृत्ते. भवनमुत्पत्ति प्रति कारणत्वात् भावनेति तस्य नामान्तरम् । अभिधाय-कत्वसम्बन्धेन तस्या शब्दनिष्ठत्वात् शाब्दी भावनेति च नामान्तरम्, विधि-निमन्त्रणामन्त्रणेत्याद्यनुशासनेन तत्रैव शक्तिग्रहादिति मीमासकमर्यादा । अत्रेद तत्वम्—लोके गुरुर्मां गवानयने प्रवर्तयतीति व्यवहारवत् गुरूच्चारित-लिङ् मां प्रवर्तयति इति व्यवहारदर्शनात् गुरौ लिङि वाक्ये, गुरुवाक्यवदेक-पुरुषान्तरे चानुगत प्रवर्तनावत्वमेव वाच्यम्, तत्र गुरौ प्रवर्तनावत्वं समवायेन, इतरेषु तु क्रमेण तदभिधायकत्व-तद्वाचकघटितत्वतद्वाचकोच्चारयितृत्वसम्बन्धैः प्रवर्तनावत्वम् । सम्बन्धाननुगमस्तु न दोषाय परिगण्यते । एको घटः एकं रूपम् इत्यादिव्यवहारयो. समवायसमानाधिकरण्याभ्यां तार्किकैरङ्गीकृत-त्वात् । Registered (रजिस्टर्ड) इति पत्रसम्पुटके विलिख्य पत्रसम्प्रेषण-

कार्यालये कर्मकराय पत्रसम्पुटके दत्ते तान्यक्षराणि तं प्रवर्तयन्तीति प्रत्यक्षमनुभवामः । एवं राजशासनवाक्यानामप्यलौकिकप्रवर्तनाबोधकत्वमनुभवामः । अस्याः प्रवर्तनायाः शाब्दीभावनापरपर्यायः कार्यभूतापुरुषप्रवृत्तिस्तु अर्थयते कामयते फलमिति व्युत्पत्यार्थसंज्ञकपुरुषनिष्ठत्वादार्थीभावनेति व्यवह्रियते ।[1]

सेयं प्रवृत्तिरूपाऽऽर्थीभावना पूर्वोक्तरीत्या मध्यवर्तीष्टसाधनत्वाद्यनुमितिजन्येति पूर्वोक्तशब्दभावनया सह तस्याः स्वज्ञानाधीनानुमितिजन्यत्वरूपः परम्परासम्बन्धस्सर्वैस्तार्किकैरपि स्वीक्रियत एव । एवं च सर्वत्र विधिवाक्यस्थले आख्यातार्थभूतायामार्थीभावनायां विध्यर्थभूताया एव शाब्दीभावनाया अन्वयो भवतीति स्वीकारेण सर्वस्माद्विधिवाक्यात् अर्थभावना स्वज्ञानाधीनानुमितिजन्यत्वसम्बन्धेन शाब्दभावनावती इत्येवान्वयबोध इति मीमांसकैस्सिद्धान्तितम् । स्वसिद्धान्तो-पष्टम्भकतया ते कांचन साहित्यमर्यादामप्युपस्थापयन्ति । तथाहि—देवदत्तः स्वयमेव पाकादेरिष्टसाधनत्वमन्वयव्यतिरेकाभ्यामवगत्य पाकं च सम्पूर्णसम्पाद्य भोजनार्थं यत्रोत्सुकस्तिष्ठति तत्र तथा हे देवदत्त ! त्वं पच इति वक्तुरुपहास्यतैव दृश्यते सा नव्यतार्किकमते कथमपि नोपपद्यते । तन्मतरीत्या तत्र पाको मदिष्टसाधनमित्येव विध्यर्थः पर्यवसन्नो भवति । न तत्र किञ्चिदयथार्थत्वमिति तन्मतरीत्या सोपहास्यता कथमपि नोपपादयितुं शक्या । मीमांसकरीत्या तु सोपपन्ना । तथाहि—तस्मिन् स्थले देवदत्तादेः पाके प्रवृत्तिरर्थभावनारूपान्वयव्यतिरेकाभ्यां स्वयमेव पाकादेरिष्टसाधनत्वमनुमाय सम्पन्ना न तु विधिवाक्यश्रवणानन्तरमाप्ताभिप्रायरूपशाब्दीभावनामवगम्य तद्विषयत्वेन हेतुना पाकादेरिष्टसाधनत्वमनुमानसम्पन्नेति प्रकृतस्थले पुरुषप्रवृत्तिरूपार्थभावनायाः प्रकृतविधिवाक्यावगम्यमानशाब्दभावनया सह स्वज्ञानाधीनानुमितिजन्यत्वसम्बन्धो नानुमानगम्य इति कृत्वा मीमांसकरीत्या शाब्दबोधनेऽङ्गीक्रियमाणे पूर्वोक्तविधिवाक्यात् शब्दस्वाभाव्याल्लभ्यमानः—स्वज्ञानाधीनानुमितिजन्यत्वसम्बन्धेन शब्दभावनावती आर्थभावना इत्ययमर्थः सर्वथा मिथ्याभूत एवेति तद्वाक्योच्चायितुरप्यतार्थवादितया उपहास्यत्वमुपपद्यत इति सिद्धं मीमांसकाभिप्रेत एव विध्यर्थस्सूपपन्न इति । एवं सिद्धे मीमांसकाभिप्रेतविध्यर्थस्वरूपे स्वाध्यायोऽध्येतव्यः इत्यध्ययनविधिः पूर्वोक्तविध्यर्थज्ञानमन्तरेण क्रियमाणं धर्मानुष्ठानं विफलमेवेति वदन् मीमांसकानां मन्वादीनाञ्च महर्षीणामद्ययावदनुवर्त्तमानधर्मानुष्ठानं हेतुमुक्तानुमितिं तद्धेतुभूतमुक्तप्रवर्तनाज्ञानञ्चानाहार्याप्रामाण्यज्ञानानास्कन्दितनिश्चयरूपं गमयति । अतः प्रत्यक्षानुमानप्रामाण्यवादिनाम् वैदिकानां शैली जागरूकतया मीमांसकैः सर्वत्र धर्ममूल-

१. भट्टरहस्यम् पृष्ठ—

विचारे परिपाल्यत इति सिद्धम् ।

### (घ) अनुमानेनावैदिकमतनिरासः

एवं सिद्धायामवैदिकानामैतिहासिकपद्धत्यनुवर्तिनां शैल्यैव पूर्वोक्तानुमितौ विद्यमानानां पक्षसाध्यहेतूनां विमर्शो नाप्रस्तुतः । स्वर्गकामो यजेत इत्यादि-वाक्ये यागः स्वर्गसाधनम् स्वर्गकामकर्त्तव्यतया आप्तप्रवर्तनाविषयत्वात् इति मीमांसकैः क्रियमाणायामनुमितौ यागः पक्षः, स्वर्गसाधनत्वं साध्यम्, तादृश-प्रवर्तनाविषयत्वञ्च हेतुः इति तावदविवादम् । तत्र हेतुस्वरूपं पुरस्कृत्य मीमांसकैः पूर्वोक्तानुमितिः क्रियत इति सुविशदमालोचनीयतामर्हति । हेतुज्ञानं हि अनुमितेः प्राणाः । हेतुस्वरूपमपरामृश्यानुमितिर्न भवत्येव । नहि धूममविज्ञाय पर्वते वह्निरनुमातुं शक्यते धूमेन । तदत्र प्रवर्तना विषयत्वहेतुकानुमाने त्रैविध्यं लोके दृश्यते प्रभुसम्मित आदेशः प्रथमः, लौकिकाप्तोपदेशो द्वितीयः वेदवाक्यादे-शस्तृतीयः । तत्र प्रभुशक्तिसमृद्धराजाज्ञारूप-प्रवर्तनाविषयत्व-हेतुना इष्टानिष्ट साधनत्वेऽनुमाय लोको नियमितो भवति राजासनेषु । अत्र हेतुतावच्छेदक-कोटौ राजा, तस्य प्रभुशक्तिसमृद्धिश्च द्वयं वर्तमानतयाऽनुभूयमानमपेक्ष्यते, अन्यथा राजशासनं मृतमित्येव व्यवह्रियते ।

अतएव भारविः—

**अबन्ध्यकोपस्य विहन्तुरापदां, भवन्ति वश्याः स्वयमेव देहिनः ।**
**अमर्षशून्येन जनस्य जन्तुना, न जातहार्देन न विद्विषादरः ॥** इति ।[1]

केनापि हेतुना राजाज्ञारूपप्रवर्तनाविषयत्वस्योक्तानुमितिकारणेऽसमर्थ-त्वग्रहणं मरणमिति सर्वैरनुमन्यत एव । अयमेकः प्रकारः प्रवर्तनाविषयत्व-हेतोः, यत्र हेतुतावच्छेदककोटौ प्रवर्तकपुरुषनिष्ठप्रभुशक्तिरवश्य ज्ञातव्या भवत्यनुमित्सुभिः अयमेव प्रभुसम्मित उपदेश इत्याख्यायते ।

द्वितीयस्त्वनुमेयगतेष्टसाधनानिष्टसाधनत्वविषयकप्रमात्मकज्ञानवत्पुरूषसमवे-तप्रवर्तनाविषयत्वहेतुकानुमितिस्थले दृश्यते यथालौकिकाप्तोच्चारितेषु वाक्येषु । अत्र हेतुतावच्छेदककोटौ प्रवर्तकपुरुषस्यानुमेयेष्टसाधनत्वविषयकयथार्थज्ञानवत्त्वं प्रवर्तकपुरुषस्यावश्यं ज्ञातव्यं भवति । केवलप्रवर्तनाविषयत्वं च तादृशस्थले प्रवर्तकस्य तादृशयथार्थज्ञानत्वानिश्चये प्रयोजकशंका कवलितं शिथिलमूलमेव भवति । यथा बुद्धमोहमदख्रिस्तादिप्रणीतग्रन्थेषु ।

तृतीयस्तु प्रकारो मीमांसकैर्वेदवाक्येष्वेव समादृतः । अनादिसिद्धसजाती-योच्चारणसापेक्षोच्चारणानुपूर्वी सम्बन्धिप्रवर्तनाविषयत्वहेतुना हि यागादौ

१. किरातार्जुनीयम् १.३३ ।

स्वर्गादिसाधनत्वमनुमिन्वन्ति मीमांसानुयायिनः । प्रकारत्रयमप्येतदवैदिकैरैतिहासिकैर्नापलपितुं शक्यम् । मन्वादिभिः क्रियमाणायां धर्मानुष्ठानमूलभूतानुमितौ चायमेव तृतीयः प्रकारः सम्भवदुक्तिक ऐतिहासिकानामपि पूर्वोक्तप्रकारद्वये धर्मानुनुष्ठानमूलभूतानुमितावभ्युपगम्यमाने हि हेतुतावच्छेदककोटिप्रविष्ट-पूर्वोक्तपुरुषगुणज्ञानं तेषामावश्यकं भवेत् । मन्वादयश्चेतिहासिकशैल्यैव धर्मज्ञान-वैराग्यातिशयसमृद्धतयावर्ण्यमाना वेदस्य क्वचिदपि कर्त्तारं न स्मरन्ति, नापि स्वशिष्याणां पूर्वोक्तानुमितिनिर्माणायापदिशन्ति इति प्रर्वोक्तप्रकारद्वयं मन्वादीनां धर्मशास्त्रानुष्ठानहेतुभूतानुमितावसम्भवदुक्तिकमेवेति परिशेषात् तृतीय एव प्रकारस्समायातीति-अस्माकमिव मन्वादीनामपि सर्वेषां वैदिकानां परम्परया पठ्यमान वेद एव मूलभूततयाऽवलम्ब आसीत् । तदिदं सर्वमभिप्रेत्य भट्टपादा वदन्ति—

**वेदस्याऽध्ययनं सर्वं गुर्वध्ययनपूर्वकम् ।**
**वेदाध्ययनसामान्यादधुनाध्ययनं यथा ॥[1]**

(वेदाऽध्ययनवाच्यत्वादधुनाऽध्ययनं यथा, इत्यत्र पाठान्तरम्)

### (ङ) वैदिकानां तार्किकाणां मत-परिशीलनम्

विषयेऽस्मिन् वैदिका दार्शनिकाः कणादगौतमादिमतावलम्बिनो विप्रतिपत्तिमुपस्थापयन्ति-कर्त्तारमन्तरेण रचना वेदस्य कथं स्यात् ? वैदिक्यो रचनाः कर्तृपूर्विकाः, रचनात्वात्, लौकिकरचनावत्, इत्यनुमानेन कर्तृसिद्धेः । नायं हेतुरसिद्धः, अग्निमीले पुरोहितम् इत्यादिषु वेदवाक्यसन्दर्भेषु स्वरवर्णक्रमविशिष्टायाः पदरचनायाः प्रत्यक्षत्वेन पक्षे हेतोस्सत्वात् । नापि विरूद्धः, रघुवंशादौ सपक्षे कर्तृत्ववति रचनात्वस्य वर्तमानत्वात् । नाप्यनैकान्तिकः, कर्तृत्वाभाववति गगनादौ रचनाया अदृष्टत्वात् । न चापि बाधितः, प्रत्यक्षेणागमेन वा वेदे कर्त्रभावनिश्चयानुत्पादात् । नापि सत्प्रतिपक्षः, स्थाणुपुरुषविशेषानुपलब्धेरिव प्रकरणचिन्ताहेतोः, हेतुत्वेनानभिधानात् । नाप्ययं हेतुरप्रयोजकः यथा धूमस्य ज्वलनाधीन आत्मलाभः, ज्ञप्तिस्तु धूमाज्ज्वलनस्य, तथैव कर्त्रधीना रचनाभिनिर्वृत्तिः, प्रतीतिस्तु रचनाभ्यः कर्त्तुः । तस्मात्प्रयोजक एव हेतुरिति ।

### (च) अनुमाने मीमांसकमतम्

वाक्यत्वहेतुकपौरूषेयत्वानुमाने पूर्वमुक्ता ये दोषाः त एवात्रापि भवन्ति । अध्ययनरूपस्य पारतन्त्र्येण रचनस्याद्यत्ववत्सर्वदोषपत्तेः । अनया दिशा विपक्षे नास्ति किमपि बाधकम् । अस्ति तु पक्षे बाधकम् । न ह्यसौ कर्त्ताऽस्मदादि-

---

१. श्लोकवार्त्तिकम् (वाक्याधिकरणम्) पृष्ठ—९४०९ श्लोक—३६६ ।

भिरूपलभ्यते । न च जीर्णकूपारामदिवत्कर्तुरस्मरणं वक्तुं शक्यम् प्रमाणान्तरागोचरकालान्तरभाविफलसाधनबहुवित्तव्यय-कायक्लेशादिपूर्वकप्रवृत्तिसाध्ये वक्तृप्रत्ययमन्तरेण प्रेक्षावतामनुष्ठानासम्भवात् । जीर्णकूपादिषु तु देशोच्छेदादिना पुरुषविच्छेदात्प्रयोजनाभावाच्च कर्त्रस्मरणम् । इह त्वनन्तैः पुरूषैरस्खलितमात्रास्वरवर्णसन्दर्भमध्येतृपरम्परयाऽधीयमाने सति प्रयोजनवति च कर्तुविस्मरणं न युक्तम् । अतोऽवश्यस्मर्तव्यस्य कर्तुरस्मरणादवगम्यते नासावस्तीति । तथा च वेदा अपौरूषेयाः, सम्प्रदायाविच्छेदे सत्यस्मर्यमाणकर्तृकत्वादात्मवत् इत्यनुमानं प्रसिध्यति । जीर्णकूपारामादिषु व्यभिचारवारणाय सत्यन्तं विशेषणम् । कालिदासादिवचस्सु व्यभिचारवारणाय विशेष्यम् । नायं हेतुरसिद्धः विरूद्धो वा, अध्येतृपरम्परायां हेतोः प्रत्यक्षत्वात्, सपक्षे गगनादौ वर्तमानत्वात् । नाप्यनैकान्तिकः, रघुवंशादौ हेतोरसत्वात् । नापि बाधितः, प्रत्यक्षेणागमेन वा कर्त्रभावनिश्चयात् । न चापि सत्प्रतिपक्षः, अस्मर्यमाणकर्तृकत्वस्याध्येतृसम्प्रतिपन्नत्वेन संशयाभावात् । नाप्यप्रयोजकाः, हेतुसत्ताया साध्यास्तित्व-प्रयुक्तत्वात् ।

## (छ) मीमांसकानुमाने नैयायिकमतेन दोषोद्भावनं तत्परिहारश्च

अस्मिन्ननुमाने हेतावसिद्धिदोषमुद्भावयन्ति नैयायिकाः—सम्प्रदायविच्छेदस्सर्गादौ भवति, अस्मर्यमाणकर्तृकत्वञ्चासिद्धमिति । महाप्रलये सर्वभावपदार्थानां विच्छेदादध्येतृपरम्पराया अपि विच्छेदस्स्वाभाविकः । अतो विशेषणासिद्धिः । आसेतुहिमाचलपर्यन्तं विस्तृतायामस्यां भुवि कर्तुस्मरणाभावो न निश्चेतुं शक्यते । एवं निश्चयस्सर्वज्ञस्यैव भवितुमर्हति । अस्मासु न कोऽपि सर्वज्ञः । अतो विशेष्यासिद्धिरिति ।

## (ज) मीमांसकनैयायिकयोर्मतसमन्वयः

अत्रेयं विषयपरिशुद्धिः—वैदिकदार्शनिकेष्वेकैकोऽपि स्वस्वशास्त्रप्रवर्तकेन महर्षिणा यादृशः पन्था निर्मितः तस्मिन्पथि विचरन् अवैदिकैः क्रियमाणानाक्षेपान् परिहरतीति सहजसिद्धोऽयं गुणो दार्शनिकानाम् । तत्राप्येकैकस्य दर्शनस्य प्राधान्येन प्रतिपाद्यं वस्तु किञ्चित्, तत्पोषणाय सहकारिणः पदार्था वहवः । प्राधान्येन प्रतिपाद्यवस्तुस्वरूपे नेमे दार्शनिका विप्रतिपद्यन्ते, किन्तु तत्सहकारित्वेन स्वीकृतेषु पदार्थेषु भूयसी विप्रतिपत्तिः । तत्तच्छास्त्राध्ययनेनावश्यं प्रतीयेत-यदमीषां मिथोऽहिनकुलवद्विरोध इति । एवं कलहायमानाः अपि अवैदिकानां मतं निराकर्तुं अन्यैस्सह विरोधे तु वयं पञ्चोत्तरं शतम् इति न्याये[1]कीभवन्ति । तत्र किं कारणमन्यत्स्यात् सर्वप्रमाणानांमूर्धन्याद्वेदादृते ।

---

१. न्यायदर्शनम् सूत्र, वात्स्यायन भाष्य ।

वेदेन खलु सूत्रेण सर्वं एवेमे प्रबद्धा. । तत्राप्तोपदेशत्वेन तस्य प्रामाण्य साधयन्तु, केवलोपदेशरूपत्वेन वा । आप्तोपदेशसामर्थ्यात् इति गौतममहर्षिसूत्रम् आप्तैरयमुक्त. शब्द इत्यत. सम्प्रत्यय. इति वात्स्यायनभाष्यञ्चावलम्ब्य प्रवृत्ता नैयायिकसरणिः ।[1] तस्य ज्ञानमुपदेश इति जैमिनेस्सूत्रम् तस्य प्रतिज्ञातस्य धर्मस्य ज्ञानं ज्ञापकम् उपदेशः विशिष्टमुच्चारणम् इति च शाबर भाष्यमवलम्ब्य प्रवृत्ता मीमांसकसरणि· । तत्र त्रिविधा चास्य शास्त्रस्य प्रवृत्तिः उद्देशो लक्षणं परीक्षाचेति ।[2] तत्र नामधेयेन पदार्थमात्रस्याभिधानमुद्देश. । तत्रोद्दिष्टस्य तत्त्वव्यवच्छेदको धर्मो लक्षणम् । लक्षितस्य यथालक्षणमुपपद्यते न वेति प्रमाणैरवधारण परीक्षा इत्यादि वात्स्यायनभाष्यानुसारेण शास्त्रस्यास्य प्रमाणशास्त्रत्व तावत् सुस्पष्टम् ।[3] जैमिनिसूत्रतद्भाष्यपर्यालोचनया मीमासशास्त्रस्य धर्मशास्त्रत्व, विचारशास्त्रत्व, **वाक्यशास्त्रत्वं वा स्पष्टम्** । धर्मस्त्वलौकिको वेदतन्मूलस्मृत्यादिसमधिगम्य इति तावन्निर्विवाद समेषाम् । तत्र मीमासाशास्त्रस्य वेदेन सह यावत्सानिध्य न तावदन्यस्य शास्त्रस्य ।

**यथाकथंचिदारब्धात्रयी मार्गाऽनुसारिणी ।**
**वाग्वृत्तिरल्पसाराऽपि श्रद्धधानस्य न शोभते ॥**[3]

इति वदन्तो भट्टपादा. मीमासायास्त्रयीमार्गानुसारित्व कण्ठत एव वदन्ति । यथा च प्रमाणाना विशिष्य विचाराय न्यायशास्त्रस्य, प्रमेयाना तथा विचाराय च वैशेषिकशास्त्रस्यैदम्पर्येण प्रवृत्तिरिति तयोरेतद्विचारो विशिष्य विषयीभूतः न तथाऽयं शास्त्रान्तरस्य कस्यचिद्विषयो भवति, तथापि यस्य शास्त्रस्य यः प्रधानविषयस्तमनपाय स्थापयितु ततच्छास्त्रविदः, यत्र शास्त्रान्तरविरोधः प्रसज्यते तत्रान्यासदृशमेव पन्थान स्वकीय कमपि नवीनमाकलयन्त. शास्त्रान्तरकारान् अभियोक्तु सन्नह्यन्ति । तस्माच्छास्त्रकार एकैकोऽपि प्रमाणप्रमेयव्यवस्थापनकृते इतरैस्साकं संग्रामभूमिं बलान्नीयते । तत्र वेदार्थविचारैकोद्देशेन दीक्षितवन्तोऽपि मीमासकाः प्रमाणप्रमेयपर्यालोचनमीषदावश्यक मन्वानास्तत्रापि दृष्टि मनाग्व्यापारितवन्तः । तथैव केवलाना प्रमाणानां प्रमेयाना वा निरूपणे शास्त्रस्य न्यूनतामकलयन्तो नैयायिकाः काणादाश्च किञ्चिद्धर्मस्वरूपमपि न्यरूपयन् । तत्र प्रामाण्यस्य परतस्त्वसाधनाय नैयायिकाः उपदेशे आप्तत्वं समावेशयन्ति । तदिदमुपरिष्टान्निपुणतरं समालोचयिष्यामः तत्रोपदेशे आप्तः क इति प्रश्ने ईश्वरस्य जगन्निर्मातुः नाम निर्दिशन्ति । अतएव तत्कर्तृत्वं वेदानामित्यवस्थापयन्ति ।

१. जैमिनि—अ० १, पा० १, सू० ५ पृष्ठ-२३, शबर भाष्य ।
२. वात्स्यायन भाष्य—अ० १, आ० १ सू० ३ पृष्ठ—१७ ।
३. श्लोकवार्त्तिकम्-ग्रन्थकारप्रतिज्ञा-श्लोक ८, पृष्ठ—३ ।

## ज (१) गौतमजैमिनिप्रयुक्तस्य उपदेशपदस्य विवरणम्

अत्रैव दौर्बल्यं नैयायिकानामवगच्छामः। महर्षिणा गौतमेन जैमिनिना वा प्रयुक्तस्योपदेशशब्दस्य न शब्दोऽर्थः। क्रियाप्रवृत्तिनिमित्तकत्वमुपदेशशब्दस्य स्वीकर्तव्यम्, गायत्र्या उपदेशः, पञ्चदशाक्षर्या उपदेशः इत्यादावुपदेशशब्दस्य विलक्षणोच्चारणक्रियायां प्रयोगदर्शनात्। वेदे मन्त्राणामुपदेशो भवति, न तु रघुवंशादिकाव्यस्य। वच्मि, उपदिशामि इति प्रयोगो भिन्नार्थकौ भवतः न तु सामानार्थकौ।

अतएव—

**त्वामस्मि वच्मि विदुषां समवायोऽत्र तिष्ठति।**
**आत्मीयां मतिमास्थाय स्थितिमत्र विधेहि ताम्॥**[1]

इत्यत्र वच्मि इत्यस्य उपदिशामि इत्यर्थे लक्षणा समाश्रीयते। यदीमौ समानार्थकौ भवेतां न तर्हि लक्षणासमाश्रयणं युक्तं भवेत्। अतश्च आप्तस्य भ्रमप्रमादादिदोषरहितस्येश्वरस्य विलक्षणोच्चारणक्रियाविशेष आप्तोपदेश इत्यनेनोच्यत इति सिध्यति। एतादृशक्रियावति चेश्वरे वेदोपदेशष्टृत्वं भवेत्, न तत्कर्तृत्वम्। सर्वज्ञ ईश्वरः सृष्ट्यादौ ऋषिभ्य उपदिशति, ते चान्यानुपदिशन्ति। ईश्वरो पि जगत्सृजन् पूर्ववदेव सृजेत्। यथेदानीं काश्यां भागीरथी प्रवहति तथैव पूर्वसृष्टावपि तत्र भागीरथी प्रवहन्त्यासीत्, तथैव पूर्वसृष्टावपि वेदा अभवन्नुपदेशक्रमेणेति स्वीकर्तव्यमेव। एवं प्रवाहनित्यत्वे स्वीक्रियमाणे वेदानामीश्वरकर्तृकत्वं न कथमपि सिध्यतीति सामञ्जस्ये सति, अर्थं बुद्ध्वा शब्दरचना इति क्रमेणेश्वरकर्तृकत्वं वेदानां साधनं गौरवास्पदं भवेत्। अतएव मीमांसका ईश्वरे ताटस्थ्यमवलम्बमाना वेदस्यैव नित्यत्वं जगन्नियामकत्वं प्रशासकत्वञ्च स्वीकृत्य तदपौरुषेयत्वं प्रतिपादयन्ति। एतेन मीमांसका ईश्वरप्रद्वेषिण इति वक्तुं न शक्यते।

## (झ) ईश्वरविषये मीमांसकानां ताटस्थ्यम्[2]

ते (मीमांसकाः) ईश्वरं क्वचिन्न साधयन्ति, नापि खण्डयन्ति। वेदादेव हि सर्वं प्रसिध्यतीत्यभिप्रयन्ति। अस्यापि कारणमिदमभ्यूहितं शक्यते यच्छबरकुमारिलप्रभृतिषु मीमांसकेषु धर्मावबोधाय प्राधान्येन वेदवाक्यार्थान् याथातथ्येन निरूपयितुं प्रवृत्तेष्वपि चार्वाकबौद्धप्रभृतिभिः वैदिकधर्मोपरि क्रियमाणं

---

१. काव्यप्रकाश—चतुर्थः उल्लासः पृष्ठ—

१. अत्र केचित्प्रत्यवतिष्ठन्ते-यत् बहवः खलु प्रामाणिकाः नास्ति मीमांसमत ईश्वर एव वदन्तीति। यथासिद्धान्तबिन्दौ श्री मधुसूदनसरस्वत्यः—नास्ति सर्वज्ञत्वाद्युपेतं ब्रह्मेति मीमांसकाः—इति। प्रसिद्धिरप्येतदनुगुणैव

कुठाराघातं निवारयितुमपि ते प्राधान्येन प्रवृत्ताः इदन्त्ववश्यमेष्टव्यम्—यद्यथा मीमांसकैरवैदिकाना मत निराकृत न तथाऽन्यैर्दार्शनिकैरिति । ज्ञानं प्रत्यक्षमिति बौद्धा इव नैयायिका अपि स्वीकुर्वन्ति मीमांसकास्तु सर्वज्ञमेव निषेधयन्ति । परतः प्रामाण्यं बौद्धा अपि वदन्ति नैयायिका अपि मीमासकास्तु स्वतः प्रामाण्यमिति । भण्डूधर्तनिशाचरैस्त्रयी निर्मितेत्यास्थिषतावेदिका·, नैयायिकास्तु ईश्वरनिर्मितेति, मीमासकैः तादृशः कोऽपि पदार्थो न स्वीकृतः, यश्च बौद्धैस्स्वीकृतः । अतएव 'खदृतिनिक्षिप्तगोक्षीरन्यायेन' बौद्धाभिहितानामहिंसासत्यादीनामपि तदभिहितत्वेन धर्मत्व न स्वीकुर्वन्ति । यदि सर्वज्ञ कञ्चन स्वीकुर्म· तर्हि सर्वज्ञमात्मान बोधयन्बौद्धस्समागच्छेत् इति भट्टपादैस्स निराकृत इति । यस्तु यथा तथा वा, सर्वथा मीमासकानामीश्वर प्रति न प्रद्वेषः, नाप्यानुकूल्यबुद्धिः, केवलं ताटस्थ्यमेव ।[1]

---

वर्तते—निरीश्वरा मीमासका—इति । द्विविध एव प्रसिद्ध· प्रस्थानभेदो मीमासकानाम्—कुमारिलप्रस्थानम्, प्रभाकरप्रस्थानमिति । तत्र कुमारिलपादा· स्पष्टमेव स्रष्टारमीश्वर निषेधन्ति=सर्वज्ञान्निषेध्या नः स्रष्टुस्सद्भावकल्पना—इति । कि बहुना ? सबन्धाक्षेपपरिहारप्रकरणे प्रायेण शताधिक श्लोका ईश्वरसृष्टिप्रलयादिनिरासपरा दृश्यन्ते । तत्र यदि कुमारिलपादा·, सेश्वरमीमांसापराः, तर्हि किमिति महान्तमायासमत्रावलम्बन्त इति सर्व एव समालोचयन्तु । अतो वय पश्याम·—न न हि कुमारिलपादाः सेश्वरमीमांसापराः—इति ।

वयं तु प्रतीमः—सबन्धाक्षेपपरिहारप्रकरणगतैश्लोकैस्सर्वैरपि कुमारिलपादा आनुमानिकेश्वरनिरासमेवाशेरते, न तु वैदिकेश्वरनिरासम् । सर्वज्ञवन्निषेध्या न इति श्लोके सर्वज्ञवत् इति निदर्शनमत्रैव स्वरसम् । अनेन हि निदर्शनेनेदमेव विवक्षितम्यत् परस्पराश्रयप्रसगात्, बुद्धस्य सर्वज्ञत्वमनुमानेन बुद्धविरचितेनागमेन वा निर्णेतुमशक्यमिति तत्स्वारस्येन तु दार्ष्टान्तिकभागेऽपीदमेव विवक्षणीयम्—यत्, ईश्वरोऽप्यनुमानेन, आनुमानिकेश्वरविरचितेनाम्नातेन वा न सेत्स्यतीति । इत्थ च सर्वोऽपि पूर्वतन· सदर्भो वेदपौरुषेयत्वनिरासपर एव, नत्वीश्वरनिरासपरः

नन्दीश्वरविरचित प्रभाकर विजय

भूमिका—भ० म० अनन्त कृष्ण शास्त्री—पृ० २-३ ।

१. अत्रेदमवधेयम्-यथा-साख्यशास्त्र प्रकृतिपुरुषविवेचनार्थप्रवृत्तमितीश्वरतत्व नैव स्पृशति । ईश्वरप्रतिपादनस्य शास्त्रतात्पर्यविषयभूतप्रकृतिपुरुषख्यातिविवेचन प्रति प्रतिबन्धकत्वात् । अतो यथा कापिलं शास्त्र

## (अ) अत्र भगवत्पादानां दृष्टिः

इदञ्चात्रानुमातव्यं भवति—यद्भगवत्पादानां श्रीशंकराचार्याणामवतारात्पूर्वं मीमांसकानां स्थितिरन्यादृशी, तदनन्तरं च स्थितिरन्यादृशी आसीदिति। प्रथमं मीमांसकास्स्वसिद्धान्ते दृढा अभवन्, अनन्तरञ्च किञ्चदिव तत्र शैथिल्यमभवत्। ईश्वरसम्बन्धे विनैव यथायथमनुष्ठितैः कर्मभिः स्वस्वाभिलषितानि -ऐहिकानि आमुष्मिकाणि-ऐहिकसंवलितामुष्मिकाणि च फलानि प्राप्यन्त इति दृढा मतिरासीत्। मतिरियं परिपोषमवाप्तासती कदाचित्कालान्तरे ज्ञानेन संकल्पेन बुध्या आयुषा च दुर्बलान् नास्तिकत्वे परिणमयेदिति शंकया भगवत्पादाः तन्मतानुयायिनश्च मीमांसकपद्धतिं किञ्चिदिव परिवर्तयाम्बभूवुः। प्रायस्सर्वेषु श्रौतेषु कर्मस्वनुष्ठीयमानेषु सम्प्रति सोमेन यक्ष्ये दर्शपूर्णमासाभ्यां यक्ष्ये अग्नीनाधास्ये इति संकल्पं कुर्वाणः अभिवदति 'तेन परमेश्वरं प्रीणयानि' इति। श्रद्धादिषु स्मार्तेषु कर्मस्वनुष्ठीयमानेषु सपात्रकश्राद्धकर्तारः दर्व्यां हविरवदानं कुर्वाणाः

---

प्रकृतिपुरूषविवेचन एव विश्राम्यति, ईश्वरविषय औदासीन्यमेव भजते, तथैव कर्ममीमांसादर्शनमपि धर्माधर्मप्रतिपादनेनोपक्षीणम्, ईश्वरविषये तूष्णीमलम्बत इत्येव युक्तम्। वार्तिकारोऽपि आत्मवादान्ते वेदान्तनिषेवणम् व्याकरणाधिकरणे, ग्रहैकत्वाधिकरणे चान्यत्रेश्वरतत्वं विवेचितमितिवदन्, पूर्वोक्तमेवार्थमुपष्टम्भयति।

अतएव हर्षमिश्रो भीमसुतायास्स्वयंवरमण्डपे समवेतानां राजन्यानां परिचयप्रदानप्रसंगे काञ्चीनरेशस्य संस्तवे सरस्वत्यादत्ते, तस्य राज्ञोगुणवर्णनं श्रुत्वा, तद्विषये किमप्यनुक्त्वा दृष्टान्तविधया मीमांसाशास्त्रमचीकवत्। यथा—

वेदैर्वचोभिरखिलैः कृतकीर्तिरत्ने।
हेतुं विनैव घृतनित्यपरार्थयत्ने॥
मीमांसयेव भगवत्यमृतांशुमौलौ।
तस्मिन् महीभुजि तथानुमतिर्न भेजे॥

(नैषध चरित स० ११ श्लोक ६४ इति)

वार्तिककारादिभिस्स्वीकृत ईश्वरो वेदे प्रतिपाद्यः, वार्त्तिकादिषु परमेश्वरनिराकरणं च तार्किकपरिकल्पितानुमानिकेश्वरनिराकरणपरम्। अतः कौमारिलः प्राभाकराश्च मीमांसकावेदान्तिनां सन्निहिता इति वचनं विदुषां मनोरञ्जनमात्रम्।

प्रकरणपञ्चिका (परिशिष्टम्) पृ० ३२१।

ब्रह्मार्पणं ब्रह्म हविः ब्रह्माग्नौ ब्रह्मणा हुतम् ।
ब्रह्मैव तेन गन्तव्यं ब्रह्मकर्म समाधिना ॥

इति मन्त्रमुच्चार्य हविरचावदाय, इदं विष्णुर्विचक्रमे त्रेधा निदधे पदम् इत्यभिधायानन्तरं 'यन्मे माता प्रलुलोभचरति' इति मन्त्रेण जुह्वति । एव भोजनावसरे प्राणाय स्वाहा, अपानाय स्वाहा इत्यादिमन्त्रैः पञ्च प्राणाहुती-र्विधायान्ते ब्रह्मणे स्वाहा इत्याहुतिं कुर्वन्ति । ब्रह्मणि म आत्मा अमृतत्वाय इति हृदयं स्पृष्ट्वा तदन्तरमन्नं भक्षयन्ति । श्राद्धे भोजने वा मीमांसकमत-रीत्या ब्रह्मणः कोऽपि न सम्बन्धः । तथापि याज्ञिकाः कर्मकाण्डिनश्चैवमाच-रन्ति । अत्र प्रक्रियामिमांश्रोत्रस्मार्तसूत्रकारा न उपदिशन्ति । तथाप्याचरन्ति । एवं प्रतिकर्म स्नानदानादिकमेवाचर्यते लोकैः । तदत्र कारणं पश्यामः— यद्भगवत्पादकाल एवैषा रीतिरुपक्रान्ता स्यादिति । भगवत्पादानन्तरकाले च सर्वेपि मीमांसाग्रन्थकाराः ग्रन्थादौ स्वाभीष्टदेवतां स्मरन्ति ।[1]

---

१. (अ) विशुद्धज्ञानदेहाय त्रिवेदीदिव्यचक्षुषे ।
श्रेयः प्राप्तिनिमित्ताय नमः सोमार्द्धधारिणे ॥
—श्लोक वार्त्तिकम्—१

(आ) श्लोकवार्तिकमारिप्सुस्तस्याऽविघ्नसमाप्तये ।
विश्वेश्वरं महादेवं स्तुतिपूर्वं नमस्यति ॥१॥
—न्याय रत्नाकर टीका, पृ०—१

(इ) लक्ष्मी कौस्तुभवक्षसं मुररिपुं शंखासिकौमोदिकी
हस्तं पद्मपलाशताम्रनयनं पीताम्बरं शार्ङ्गिणम् ।
मेधश्याममुदारपीवरचतुर्बाहुं प्रधानात्परं
श्रीवत्सांकमनाथनाथममृतं वन्दे मुकुन्दं मुदा ॥१॥
न्यायाभासतमश्छन्नशास्त्रतत्वार्थदर्शिकाम् ।
कुमारिलमतेनाहं करिष्ये शास्त्रदीपिकाम् ॥२॥
शास्त्रदीपिका—पृष्ठ-१-३

(ई) वागीशाद्याः सुमनसः सर्वार्थानामुपक्रमे ।
यं नत्वा कृतकृत्याः स्युस्तं नमामि गजाननम् ॥१॥
जैमिनीयन्यायमाला-पृष्ठ-१

(उ) अधिसरयूतटिनीतटमधिसाकेतांगणमधितद्गुधानम् ।
खेलन्नीरदनीलो वालो मे मानसे सदा भूयात् ॥१॥
भाट्टचिन्तामणिः ।

किञ्च, तस्माद्यज्ञात्सर्वहुतः ऋचस्सामानि जज्ञिरे । छन्दांसि जज्ञिरे तस्मात् । यजुस्तस्मादजायत ।[१] त्रयो वेदा अजायन्तअग्नेः ऋग्वेदः, वायोर्यजुर्वेदः, आदित्यात्सामवेदः इत्यादि श्रुतिवाक्यान्युदाहृत्य वेद एवात्मन उत्पत्तिं बोधयति यदा, तदा तस्य पौरुषेयत्वे का विचिकित्सेति वादिनः पृच्छन्ति । नैष विरोधः-- जज्ञिरे इति शब्दस्योत्पन्न इति नार्थः, किन्तु प्रादुर्भूता इत्यर्थः । प्रादुर्भावस्तु पूर्वस्थितस्य नित्यस्य परमेश्वरादिति श्रुतिर्वदति, न तु पुनरूपलभ्य विरचनम् तत्वनुमीयत इति वक्तव्यम् । तच्चायुक्तमिति पूर्वमवोचाम ।

किञ्च, किञ्चित्तु सूक्ष्मं विमृश्यमाने विशदा मतिर्भविष्यति—जगत्येकैक-सर्गश्चोत्सर्गापवादसहितः । यदाहवनीये जुहोति इति होमत्वावच्छेदेना-हवनीयं विधत्त इति पदहोमेऽपि नाहवनीयस्य प्रवृत्तिः । पदे जुहोति इति विहित पदाधिकरणकहोमे होमत्वावच्छिन्नत्वस्य सत्वेऽपि तदतिरिक्तविषयत्वमेवा-हवनीयस्य । दध्ना जुहोति इत्यत्र दधिहोमसाधनत्वेन विहितमिति शूर्पेण जुहोति इत्यत्रापि होमसाधनत्वेन शूर्पो न विधीयते । तत्र लोकवृत्तमीषञ्जानता उत्सर्गवद्वाऽपवादस्यापवादवद्वोत्सर्गस्य भवनं नापादनीयम् । न वा तत्र सन्देह-स्समुचितः । तेन लौकिकसन्दर्भाणामुत्पादशालित्वेऽपि सकर्तृकत्वेऽपि वेदस्या-तथाभावे न तद्बाधकम्, न वा विरूद्धम् :

## (ट) विदेशीयानां पक्षः तद्विमर्शश्च

अथापि कोऽपि प्रतिवाद्युत्तरयेत्—एवं रघुवंशोऽपि बौद्धागमोऽप्यपौरूषे-यस्स्यादिति । अत्र वादरीतिमवलम्ब्य शास्त्रपठितिनोऽब्रुयु—किमेतावता वेदा-पौरूषेयत्वस्य हीनमिति । एव वादिना हि सर्वत्र. कालिदासो वा बुद्धो वा

(क) यत्कृपालेशमात्रेण पुरुषार्थचतुष्टयम् ।
प्राप्यते तमहं वन्दे गोविन्दं भक्तवत्सलम् ।।१।।

—मीमांसान्यायप्रकाशः

—एवमन्ये पि मीमांसाग्रन्थकाराः स्मरन्तीति
विस्तारभिया सर्वमत्र न वितन्यते ।

१. ऋग्वेद—पु०.९०.९

तस्माद्यज्ञात्—यज्ञरूपात्परमेश्वरात् यज्ञो वै विष्णुः इति श्रुतेः । सर्वहुत.—हुतं हुत् यस्मिस्तत्सर्वं वर्तते स सर्वहुत् तस्मात् । अथवा सर्वं जुहोतीति सर्वहुत् यट्टापि स एवेत्यर्थः । प्रलयकाले वा सर्वं जुहोति स्वमात्रयेति सर्वहुत् । तस्माद्दगादयो जज्ञिरे इति मन्त्रार्थः ।

रघुवंशं बुद्धागमं वा सन्दृब्धवानिति संकीर्तितमाकर्ण्य तस्य पौरुषेयत्वं निश्चित्य वेदस्यापौरुषेयत्वस्यापि स्यादिति वस्तुतोऽविद्यमानमेवापौरुषेयत्वं रघुवंशादीनामापादयितव्यम् । तथा च कालिदासबुद्धादीनां तत्कर्तृत्वेन चिरायप्रवर्तमानं स्मरणमेव तत्रापौरुषेयत्वे बाधकमिति । एवमभिसन्दधानो भट्टपादः प्रतिवादि प्रयोगं यदेव भवतां गोत्रं तदेव ममापीति ब्रुवाणेन जामात्रा उपमित्य परिहसति,[1] यस्य स्वारस्यं संस्कृतपरिचयवतां पाश्चात्त्यानामग्रणीः मोक्समूलरः (Max Muller) यथावदवगन्तुं चस्खाल । स स्वयमङ्गीकरोति यद्यपि ख्रि०पा० (Before christ.) अवरतो द्वे पञ्चापि वा वर्षसहस्राणि वृत्तानि वेदस्य जगत्याविर्भूतस्येति वदेम, तथापि न तत्र किमपि बाधकमस्तीति । परन्तु स प्राच्यविद्यारामणीयकेन तत्वेन सारभूतेन च परवशीक्रियमाणोऽपि चिरप्ररूढवासनान्तरस्य द्रढीयस्तया मध्ये मध्ये मतान्तरावलम्बिनं विमर्शकमात्मानमाकलयन् मीमांसकैः क्रियमाणस्य तादृशसाहसस्य किं फलमिति पृच्छति ।[2] बाधकविरहेऽपि वेदस्य तथा चिरन्तनत्वांगीकारं साहसमेव मन्यते, न तु पुनर्मीमांसकैरेककण्ठेन कथ्यमानस्य तथात्वस्यैकपदेऽपलपनम् इत्येव सन्तोष्टव्यमस्माभिः ।

---

१. यादृशतादृशमीमांसकैरप्यतीन्द्रियविषयपुरुषवचनप्रामाण्यनिराकरणादपौरुषेयत्वाध्यवसायनिराकृतकारणदोषाशङ्कनिरपवादप्रामाण्यसिद्धिं प्रतिहन्तुमशक्यां मन्यमाना निरुत्तरीभूता बालानुकरणवाक्यसदृशैः स्ववाक्यैर्व्यवलिख्यमानहृदयाः सन्तोऽपि प्रक्षीणकुहेतुवचनजालाः कन्यावरणार्थागतमूर्खवरगोत्रप्रश्नोत्तरवत् ।

—तन्त्रवार्त्तिकम् पृष्ठ-२३७ ।

२. "The views entertained of revelation by the orthodox theologians of India are far more minute and elaborate than those of the most extreme advocates of Verbal inspiration in Europe. The human element, called, Paurusheyatva (पौरुषेयत्व) in Sanskrit, is driven out of every corner or hiding place, and as the Veda, is held to have existed in the mind of the Deity before the beginning of time, every allusion to hisiorical events, of which there are not a few, is explained away with a zeal aud lngenity worthy of a bettar cause.

But let me state at once that there is nothing in the hymns themselves to warrant such extravagant theories". —The Vedas. F. Max Müller. P. 21-22.

## तृतीयः परिच्छेदः

# प्रमाणलक्षणपरीक्षणम्

"स्वरूपसंख्यार्थफलेषु, वादिभिः
यतो विवादा बहुधा वितेनिरे ।
ततो वयं तत्प्रतिबोधसिद्धये
प्रमाणपारायणमारभामहे ॥

किमिदं जगत् ? कस्मादिदं प्रावर्तिष्ट ? किञ्चात्र प्रमाणम् ? इत्यादि परीक्षितुं सर्व एव दार्शनिकाः प्रवृत्ताः । नैसर्गिकोऽयं पन्थाः परीक्षकाणाम् यत्किमपि प्रतिपादयितुं प्रवृत्तं प्रति परः किं तत्र प्रमाणमिति जिज्ञासत इति । अतो दार्शनिकेषु भवत्वास्तिको वा नास्तिको वा सर्वोऽपि स्वस्वाभिमतान्विषयान् यथायथं प्रतिपादयन् प्रथमं तत्र प्रमाणमुपस्थापयति । "मानाधीना मेयसिद्धिः" इति न्यायस्सर्वसम्प्रतिपन्नः । स्वाभिमतं प्रमाणमुपादाय तस्य प्रमेयं फलं च निर्दिशति । मानं मेयं माता प्रमाऽप्रमा चेत्यादीन् विषयानधिकृत्य विचारस्सर्वैरेव दार्शनिकैरुपस्थाप्यते । इमे च दार्शनिकाः कोटित्रये विभक्ता भवन्ति । किमपि नास्तीति शून्यमेव केचनाभिप्रयन्ति, तेन च कामक्रोधलोभमोहमदमात्सर्याणां प्रसराभावः तेषां फलम् । अहमेक एव नापरोऽस्ति कश्चन, तेन च पूर्वोक्तं फलं निर्वाधमित्यपरे । मया सहान्येऽपि सन्ति-अवयवावयविभावेन, तेनापि च तदेव फलमित्यन्ये । कोटित्रयेऽस्मिन् सर्व एवान्तर्गता भवन्ति । ममत्वबुद्धिः खलु सर्वेषामनर्थानां बीजम् । सा चेदपाकृता, न भीतेरवसरः, न वा कलहस्य, नाप्यरिषड्वर्गस्य ।

अतएव भगवान् व्यासः—

"शमार्थं सर्वशास्त्राणि निर्मितानि मनीषिभिः ।
य एव सर्वशास्त्रज्ञः तस्य शान्तं मनस्सदा ॥"

इति कीर्तयन् मनीषिणां शास्त्रकाराणां प्रयासो मनसश्शान्तय इत्यभिप्रैति । शरीरधारणाय यथाकन्दमूलधान्यादय आहाराः, तथैव बुद्धिवैशद्याय मनसश्शान्तये चेमे शास्त्रीया विषयाः प्राचीनैः परिकल्पिताः । काममिमे विषया परस्परं महान्तं

विरोधभावहेयु:, पर नास्माभिस्तत्र विरोधबुद्धिरवलम्बनीया । आपणिकः कश्च-नापणे विरुद्धान् पदार्थान् प्रसारयति । न तस्यायमभिप्रायः यदिमे ग्राहकाः प्रसानितान् पदार्थान् वीक्ष्य मिथः कलहायन्तामिति । यो यदिच्छति ग्राहकः स तद्गृह्णात्वित्येव खलु तस्येच्छा । ग्राहकग्रहणावसरे आपणिको ग्राहकस्य मनो-भावं परिचिन्त्य काम पदार्थान्तर निन्देत्, किन्तु तस्य न निन्दायां तात्पर्यमव-धारणीयमस्माभिः । "अपशवो वा अन्ये गोअश्वाः पशवः" इति वेदो गवाश्व-व्यतिरिक्तेषु पशुत्वं निषेधति, गवाश्वेष्वेव पशुत्व व्यवस्थापयति । एतेनाजादीनां पशुत्वाभावे न तात्पर्यमवधारयितु शक्यम् । तथैव शास्त्रकाराणामियं रीतिः न हि निन्दा' न्यायेनाध्यवसेया ।

## (क) "संक्षेपेण प्रमाणसंख्या-स्वरूपविषयफलानां प्रदर्शनम्"

तत्र चर्वाक· प्रत्यक्षमेकमेव प्रमाण मन्यते । प्रत्यक्षमनुमान च द्वे एव प्रमाणे सौगता. वैशेपिकाश्च । शब्दमपि तृतीयं साख्या आहुः । उपमानमपि चतुर्थं प्रमाण नैयायिका. । अर्थापत्तिलक्षणं पञ्चममपि प्रमाणं प्राभाकराः । अभाव षष्ठ भाट्टा. । सम्भवाख्यमपि सप्तममपरे । ऐतिह्यमष्टममन्ये । तथा लोकाख्य नवम केचित् । अन्ये त्वार्षमपि दशमं प्रमाणमङ्गीचक्रुरिति प्रमाण-सख्यायां दार्शनिका विप्रतिपद्यन्ते ।[1]

## (ख) "प्रमाणशब्दव्युत्पत्तिः"

तत्र सर्वस्मिन्नपि पक्षे प्रमाणशब्दः प्रोपसर्गकमाधातोः ल्युट्प्रत्ययान्तः । प्रमीयतेऽनेनेति प्रमाणमिति तद्व्युत्पत्तिः ।[1] प्रभाकरणमिति तदर्थ· "प्रमितिः प्रमाणम्" इति भावसाधनमपि कैश्चिदाश्रीयते । तद्वति तत्प्रकारकबुद्धिः प्रमा भवति । रत्नतत्वपरीक्षका रत्नानि परीक्षितु यथा निकषोपलं साधनतया

---

१. "प्रत्यक्षमेक चार्वाकाः कणादसुगतौ पुनः ।
अनुमानं च तच्चाथ सांख्या शब्दं च ते अपि ॥७॥
न्यायैकदेशिनोष्येवमुपमानं च केचन ।
अर्थापत्या सहैतानि चत्वार्याह प्रभाकर· ॥८॥
अभावषष्ठान्येतानि भट्टा वेदान्तिनस्तथा ।
सम्भवैतिह्यप्रक्तानि तानि पौराणिका जगुः ॥९॥

तार्किकरक्षा पृष्ठ-५६

१. "उपलब्धिसाधनानि प्रमाणानि इति समाख्यानिर्वचनसामर्थ्यात् बोद्धव्यं प्रमीयते अनेन इति करणार्थाभिमानो हि प्रमाणशब्दः ।"

न्यायभाष्य पृष्ठ-११२

परिगृह्णन्ति, तथैव प्रमेयतत्वपरीक्षकारसाधनतया प्रमाणं स्वीकुर्वन्ति। वस्तुनः प्रमेयस्य याथार्थ्यं येन येन प्रसिध्यति तत्तत्प्रमाण स्वीक्रियते। तत्र "साधकतम करणम्"[1] इति सूत्रयन् महर्षिपाणिनिः तमपाऽतिशयविशेषविशिष्टस्य वस्तुनः करणत्वमभिप्रैति। सचातिशयविशेषः किमेकस्मिन् वस्तुनि? उतानेकेषा समुदाये? इति विवादो दार्शनिकानाम्। अतिशयस्तु भवति सर्वत्र सापेक्षः। यत्रैकस्य वस्तुनो नैकविधानि साधनानि तत्र यस्येतरापेक्षयाऽधिकातिशयवत्व तस्यैव साधकतमत्वमुपपद्यते। यत्र च बहूनां पदार्थानां समुदायस्साधक इत्युच्यते तत्र सदमुायस्यैकत्वात् तदतिरिक्तसाधकान्तरस्याभावात् किमपेक्ष्य समुदायस्यातिशयवत्व स्यादिति चोद्यमुद्भावयन्तस्सौगताः विज्ञानस्यैकस्यैव प्रमाणत्वमुररीकुर्वन्ति। ग्राहक विज्ञानमेक ग्राह्यञ्च विज्ञानमपरम्। तथा च तेषां प्रमाणलक्षणम्—

## (ग) "सौगताभिमतप्रमाणलक्षणम्"

> प्रमाणमविसवादि ज्ञानमर्थक्रियास्थितिः।
> अविसंवादनं शब्देऽप्यभिप्रायनिवेदनात्॥[2]

अविसवादिज्ञानं प्रमाणम्। ज्ञानपदेन तद्भिन्नेन्द्रियसन्निकर्षादे· प्रामाण्यनिवृत्तिः। विसवादो वञ्चनम्, तद्योगाद्विसवादि। तद्विपरीतमित्यर्थः। तथा च यद्विज्ञानं स्वेनोपदर्शितमर्थं पुरुष प्रापयति, तत्सवादरुपत्वादविसवादकमित्युच्यते। प्रदर्शिते चार्थे प्रवर्तकत्वमेव प्रापकत्व नान्यत्किञ्चित्। प्रवर्तकत्वमपि प्रवृत्तिविषयप्रदर्शकत्वमेव। तत्र येनैव ज्ञानेन प्रथममधिगतोऽर्थः तेनैव पुरुषः प्रवर्त्तित. प्रापितश्चार्थः। प्रापिते चार्थे ज्ञानान्तरेण न किंचित्कृत्यम्। अतोऽनधिगतविषय एव प्रमाणम्, अधिगतिरेव च प्रमाणफलमित्यर्थात्समाप्तः प्रमाणव्यापार इति श्लोकस्य तात्पर्यम्।

## (घ) "न्यायमतम्"

ज्ञानस्य प्रमाणत्वे प्रमीयतेऽनेनेतिकरणव्युत्पत्तेर्वाधस्स्यादिति मन्वाना नैयायिकाः बोधाबोधस्वभावायास्सामग्र्याः प्रमाणत्वमभ्युपगमन्। तथाहि— "प्रमाणेन खल्वयं ज्ञातार्थमुपलभ्य समर्थमभीप्सति जिहासति वा" इति न्याय-

---

१. पाणिनि-१.४.४२

२. प्रमाणवार्त्तिकम् परि-१ श्लोक ३

भाष्यम् ।[1] "उपलब्धिहेतुः प्रमाणम्"[2] इति च न्यायवार्त्तिकम् । सन्दर्भद्वयस्यापीद तात्पर्यम्—एककार्यं जनयितुं भवन्त्यनेकानि कारकाणि, तेषु कस्याप्येकस्याप्यभावे कार्यं नोत्पद्यत इति सर्वसम्पतिपन्नम् । यथा—"दर्शपूर्णमासाभ्या स्वर्गकामो यजेत" इत्यत्र साध्य स्वर्ग फलम्, तत्साधनानि च दर्शपूर्णमासशब्दवाच्याः षड्यागाः । तेऽपि विहितस्वस्वाङ्गसहिता एव फल जनयितु समर्थाः । अङ्गानि च पूर्वोत्तरभेदेन, सन्निपत्यारााद्युपकारकभेदेन च नैकविधानि । तेषु एकेनाप्यङ्गेन निगुणः प्रधानयाग. फल जनयितु न भवति समर्थ । केवलमङ्गानां प्रधानानां वाऽनुष्ठानेन फल नोत्पद्यते । अतश्च सर्वांगसहिताना समुदायस्यैव करणत्वम् । "साधकतम करणम्" इति साधकतमत्व समुदायस्यैवाङ्गीक्रियत इति समुदायस्यैव स्वजन्यापूर्वद्वाराऽतिशयवत्व निर्बाधम्, तथैव लौकिकेष्वपि कार्येषु कारकसमुदायस्यैवातिशयवत्व कल्पनीयम् । अतश्च ज्ञान प्रति कर्तृकर्मादिकारकविलक्षणायाः सशयविपर्ययरहितस्यार्थस्य बोधविधायिन्या बोधाबोधस्वभावायास्सामग्र्याः प्रमाणत्वमभ्युपगन्तव्यम् । एव च—अव्यभिचरितासन्दिग्धार्थोपलब्धिसाधनत्व प्रमाणत्वमिति प्रमाणलक्षण सम्पन्नमिति ।[1]

## (ङ) "प्राभाकरमतम्"

प्राभाकरास्तु-अविसवादि ज्ञान प्रमाणमिति लक्षणस्य स्मृतिष्वतिव्याप्तिम् अनुमाने चाव्याप्ति प्रदर्शयन्तः "अनुभूति. प्रमाणम्" इति लक्षणमिच्छन्ति ।[2]

---

१. वात्स्यायनभाष्यम् पृष्ठ-१

२. (अ) "उपलब्धिमात्रस्य अर्थाव्यभिचारिण. स्मृतेरन्यस्य प्रमाशब्देन अभिधानात्"

न्यायवार्तिकतात्पर्यटीका पृ-११

२.(ब) "तथा च न्यायनयपारावारपारदृश्वा विश्वविख्यातकीर्तिरुदयनाचार्योऽपि न्यायकुसुमाञ्जलौ चतुर्थे स्तवके—

"मितिः सम्यक्परिच्छित्तिस्तद्वत्ता च प्रमातृता ।
तदयोगव्यवच्छेदः प्रामाण्यं गौतमे मते ॥',

—(न्यायकुसुमाञ्जलि ४।५) इति

३. "अत्रेद तावद्विचार्यते कि प्रमाण नाम किमस्य स्वरूप किंवा लक्षणमिति तत्सूत्र योजयिष्यते, तदुच्यते, अव्यभिचारिणीमसन्दिग्धामर्थोपलब्धि विदधती बोधाबोधस्वभावा सामग्री प्रमाणम्, बोधाबोधस्वभावा हि तस्य स्वरूपम्, अव्यभिचारादिविशेषणार्थोपलब्धिसाधनत्वं लक्षणम्" न्यायमञ्जरी पृ० १२ ।

४. "प्रभाकरास्तु अनुभूतिः प्रमाणम् । स्मृतिव्यतिरिक्ता (स्मृतेरन्या इत्यत्र पठान्तरम्) संविदनुभूति. । स्मृतिश्च सस्कारमात्रजं ज्ञानमिति वर्णयन्ति ।

तथाहि-स्मृतिज्ञानेऽप्यार्थविसंवाददर्शनात् स्मृतिज्ञानमपि प्रमाण स्यात् । ननु स्मृतिरपि प्रमाणमेव भवतु लक्षणानुगमादिति चेन्न, लोकप्रसिद्ध हि लक्ष्य लक्षणैरनुगम्यते, न पुनर्लक्षणैरेव लक्ष्यमपूर्वं प्रसाधयितु शक्यते । लक्षणानुगतिमात्रेण प्रसिद्धेरन्यथा भावो न शक्यते कर्तुम् । अतोऽतिव्याप्तिः । ननु न स्मृतिरविसवादिनी । सा हि विकल्परुपा । विकल्पश्च—शब्दज्ञानानुपाती वस्तुशून्यः प्रत्ययविशेष । यथा—खपुष्पम् शशविषाणमित्यादिशब्द· वस्तुशून्य प्रत्ययविशेष जनयति, तथैव "घटमह स्मरामि" इति शब्दोऽपि । विकल्परुपेय[1] स्मृतिः वस्तुत स्वलक्षण[2]न स्पृशति । किन्तु सवृत्तिरूपेण विद्यमानमाकारमसत्यभूतमुल्लिखति । अत एकस्मिश्चन्द्रमसि द्वौ चन्द्राविति बोधवन्न स्मृतिरविसवादिनीति चेत्अनुमान तर्हि प्रमाण न स्यात् । तस्यापि "पर्वतो वह्निमान् धूमात्" इति विकल्परूपत्वात् । विकल्परूपमप्यनुमान प्रमाणम् । तथाहि—द्विविधो हि ज्ञानानां विषयः—ग्राह्योऽध्यवसेयश्चेति । निर्विकल्पकज्ञानस्य स्वलक्षण ग्राह्यम्, विकल्पज्ञानानामध्यवसेय । अध्यवसायोनाम व्यक्त्यातद्व्यावृत्तिसाम्येन भेदाग्रह· । एवमगृहीतभेदो विकल्प स्वलक्षणत्वेनाध्यवसीयत इति स्वलक्षणमेवाध्यवसितमनुमानस्येत्यध्यवसितस्वलक्षणाविसवादात्प्रामाण्यमनुमानस्येति नाव्याप्तिरिति यदि ब्रूषे तर्हि समानन्यायेन स्मृतिरपि तथा स्यात् । शुक्तिकारजतबोधवत् सवृत्तिसन्त स्वविषय परमार्थसद्वस्तुतयाऽध्यवस्यदनुमानमपि कथमविसवादि स्यात् ? विकल्पज्ञानेनालीकभूतेनासत्यभूतः प्रदर्शितः वस्तुभूतश्च प्राप्यते । अ य: प्रदर्शित अन्यश्च प्राप्यत इति शुक्तिकारजतबोधवदेवानुमान सिध्यति । वस्तुतस्तु ग्रहणाध्यवसेययोर्भेद एव दुरुपपाद.।[3]

---

यथाहुः—"प्रमाणमनुभूतिः सा स्मृतेरन्या स्मृतिः पुनः ।
पूर्वविज्ञानसस्कारमात्रज ज्ञानमुच्यते ॥"
—तार्किकरक्षा पृष्ठ १९-२०

१. "शब्दज्ञानानुपाती यो वस्तुशून्यस्स उच्यते ।
विकल्प इति तत्वज्ञैः खरशृङ्गखपुष्पवत् ॥

२. स्वमसाधारण तत्वं यस्यात्मनो लक्षण तत्स्वलक्षणं निर्विकल्पज्ञानविषया व्यक्तिरित्यर्थ· । इदमेव स्वलक्षणम् परमार्थसत् । एव भूतपरमार्थसल्लक्षणाच्छादको वस्तुविशेषस्सवृत्ति-सन्नित्युच्यते ॥

३. (अ) अत्र सर्वतन्त्रस्वतन्त्राणा श्रीवाचस्पतिमिश्राणा पङ्क्तयस्समालोचनमर्हन्ति "केयमध्यवसेयता बाह्यस्य? यदि ग्राह्यता, न द्वैविध्यम् । अथाऽन्या सोच्यता, ननूक्ता तैरेव स्वप्रतिभासेऽनर्थेऽध्यवसायेन प्रवृत्तिरिति । अथ विकल्पाकारस्य कोऽयमर्थावसायः? किं करण-

यो ह्याकारो न गृह्यते स कथमध्यवसीयत ? स्मृतिरनुमानवद् बाह्य न विषयीकुरुते इति कथन प्रतीतिविरुद्धमेव, स्मृत्यनुमानयो प्रत्यक्षप्रतीतिवस्तु-ग्राहकत्वप्रतीते । अत स्मृतावतिव्याप्ति अनुमाने च व्याप्तिर्लक्षणस्य । यदि च स्मृतिज्ञानस्यानुभूतार्थविषयत्वादप्राप्तप्रापकत्वाभावादप्रमाण्यम्, अनुमान-स्य त्वप्राप्तस्वलक्षणप्रापकतया प्रामाण्यमिति मतम्, तर्हि अविसवादि ज्ञानम् अप्राप्तप्रापकत्वेनापि विशेषणीय स्यात् । न विशेषणीय स्यात् । नास्माक मते प्राप्त प्रति प्रापकत्वमेवापरस्यास्ति । उत्तरज्ञानाना पूर्वज्ञानप्राप्तविपयत्वादेवप्रा-प्तप्रापकत्वाभावात् इति चेन्न, प्रापकता नामार्थप्रतिबद्धता । साच पूर्ववदुत्तरस-यापि नानुपपन्ना । यथा वह्निस्वलक्षणाद्धूमस्वलक्षणम्, ततश्च धूमदर्शनम् ततश्च धूमविकल्प., तस्माच्चानुमानमित्यनुमानमर्थेन पारम्पर्येण प्रतिबद्धत्वादर्था-विसवादि अर्थप्रापणसमर्थ च, तथैव स्मृतिरपि-अर्थादनुभवः तस्माच्च सस्कार, सस्काराच्च स्मृतिरित्यर्थ प्रतिबद्धैवेति तत्प्राप्तियोग्यतया प्रमाण भवेत् ।

---

माहो योजनमुतारोपणमिति । न तावत् करणम्, न ह्यन्यदन्यत् कर्तुं शक्यम् । न हि जातु सहस्रमपि शिल्पिनो घट पटयितुमीशते । न चान्तर बाह्येन योजयितुम् । अपि च तथासति युक्त इति प्रत्ययः स्यात् । न चास्ति । आरोपोऽपि किं गृह्यमाणे बाह्ये, उतागृह्यमाणे, यदि गृह्यमाणे तदा किं विकल्पेनाहो तत्समयजेना विकल्पकेन । न तावद्विकल्पोऽभिलापससर्गयोग्यगोचरोऽशक्याभिला-पसमयं स्वलक्षण देशकालानुगत गोचरयितुमर्हति । यथाहुः—

"अशक्यसमयो ह्यात्मा सुखादीनामनन्यभाक् ।
तेषामतः स्वसवित्तिर्नाभिजल्पानुषङ्गिणी ।।" इति

न च तत्समयभाविना निर्विकल्पकेन गृह्यमाणे बाह्ये विकल्पेनाग् गृहीते तत्र विकल्पः स्वाकारमारोपयितुमर्हति । न हि रजतज्ञानाप्र-तिभासिनि पुरोवर्त्तिनि वस्तुनि रजतज्ञानेन शक्य रजतमारोपयितुम् । अगृह्यमाणे तु बाह्ये स्वाकार इत्येव स्यान्न बाह्य इति । तथा च नारोपणम् ।

—भामती २.२.२५ पृष्ठ-३३५-३६

तात्पर्यटीकायामपि विषयोऽयं ग्राह्याध्यवसेयसम्बन्धी निरूपितः ।

तात्पर्य टीका पृष्ठ-६५७

"न निरालम्बनं ज्ञानम्" इति विधिविवेकव्याख्यान्यायकणिकापि विषयमिमम् ।

—विधिविवेक पृष्ठ-२५७

ननु न वयं प्रापकतामात्रेण प्रामाण्यमभ्युपगच्छाम, किन्तु प्रवर्तकतयापि। प्रवर्तकत्वस्य प्रामाण्ये हेतुत्वात्स्मृतेश्चातथाविधत्वादप्रमाणतेति चेत् न, प्रवर्तकत्वं यदि प्रमाणलक्षणेऽनुप्रवेश्येत तर्हि निर्विकल्पकज्ञानानामप्रमाणता स्यात्, तेषां स्वयं व्यवहाराप्रवर्तकत्वात्। निर्विकल्पकोत्थास्सविकल्पा एव प्रवर्तकतया प्रापकतया च प्रमाणभूता स्युः, न निर्विकल्पकाः। किञ्च यदाकारं विज्ञानं तेनाविसंवादस्सौगतैरिष्यते। स्थूलाकारं च सर्वं प्रत्यक्षज्ञानम्। न च स्थूलस्य वस्तुत्वं तैरङ्गीकृतम्। न च स्थूलाकारं मुक्त्वाऽन्यत्प्रत्यक्षमस्ति। तस्मात्प्रत्यक्षस्याप्यप्रमाणत्वमेव। तन्मूलत्वाच्चानुमानस्याप्यप्रमाणता स्यात्।

अतोऽनुभूतिः प्रमाणमिति लक्षणं वक्तव्यम्। अनुभवत्वं प्रमाणसामान्य-लक्षणम्। अनुभवत्वं च स्मृतिभिन्नत्वे सति ज्ञानत्वम्। स्मृतिश्च संस्कारजन्यं ज्ञानम्। तदेवेदमिति प्रत्यभिज्ञाप्रत्यये तत्तांशे संस्कारजन्यताया अतिप्रसङ्गवा-रणाय स्मृतिलक्षणे मात्रपदं देयम्। संस्कारमात्रजन्यं ज्ञानम् स्मृतिरिति तथा च संस्कारातिरिक्तकारणाजन्यत्वे सति ज्ञानत्वमिति प्रमाणसामान्यलक्षणं सम्पन्नम्। प्रभाकरमते भ्रमज्ञानमेव नास्तीति तन्निवारकं विशेषणं न देयमेव। पराभिमतभ्रमस्थले सर्वत्र भिन्नविषयकं ज्ञानद्वयं स्वीक्रियत इति ख्यातिप्रसंगे वक्ष्यामः। अतोऽनुभूतित्वं प्रमाणसामान्यलक्षणमिति प्रभाकरः।

---

१. (आ) न्यायबिन्दुटीकाकारो धर्मोत्तराचार्यः—'द्विविधो हि प्रमाणस्य विषयोग्राह्योऽध्यवसेयश्च। यदाकारमुत्पद्यते, प्रापणीयश्च यमध्य-वस्यति।

—अध्यवस्यति-ज्ञास्यतीत्यर्थः.

अन्यो हि ग्राह्यः अन्यश्चाध्यवसेयः।
बौद्धनये विज्ञानमर्थजनितमर्थाकारमर्थस्य ग्राहकम्। तदुत्पत्तिमन्त-रेण विषयं प्रति नियमायोगात्। घटज्ञानं घटादेवोत्पद्यत इत्यर्थः। जनित्वं विज्ञानस्य प्रमाणस्य वा। प्रमाणस्य ग्राह्योविषय एव तस्यार्थाकारत्वम्। तस्य प्रापणीयो विषय एव तस्यार्थग्राहकत्वम्।
—न्यायबिन्दु. प्रथम परिच्छेद. पृष्ठ-२२-२३

प्रत्यक्षस्य हि क्षण एको ग्राह्यः। अध्यवसेयश्च प्रत्यक्षबलोत्पन्नेन-निश्चयेन सन्तान एव। सन्तान एव च प्रत्यक्षस्य प्रापणीय" इति प्रमाणस्य ग्राह्याध्यवसेयभेदेन द्वैविध्यं विषयस्याङ्गीकृत्य निर्वि-कल्पक-सविकल्पकयोर्विषयव्यवस्था वर्णयति।

(च) "भाट्ट-मतम्"

"औत्पत्तिकस्तु शब्दस्यार्थेन सम्बन्धस्तस्य ज्ञानमुपदेशः, अव्यतिरेकश्चार्थेऽनुपलब्धे तत्प्रमाणं बादरायणस्यानपेक्षत्वात्" इति सूत्रे ज्ञानशब्द करणसाधनः ल्युट्प्रत्ययान्त । ज्ञायतेऽनेनेति ज्ञानं ज्ञापक प्रमाणमित्यर्थः । उपदेश —गुरुमुखोच्चारणानूच्चारणैकप्राप्य. शब्द । सविधिक वाक्यमित्यर्थ । तद्धर्मे ज्ञान ज्ञापक प्रमाणमित्यक्षरार्थ । एतेनानुत्पत्तिलक्षण प्रामाण्य निराकृतम् । एव च ज्ञानोपदेशशब्दयोस्तामानाधिकरण्य निराबाधम् । "अव्यतिरेक" पदेन बाधक प्रत्ययनिराम ।[2] 'च' कारात्सशयस्य निवृत्ति. । 'अर्थेनुपलब्धे' इत्यनुवादत्वम् । "औत्पत्तिक" शब्देन करणदोषनिवृत्ति । तथा च विशेषणत्रयमुपाददानस्सूत्रकार.—कारणदोषबाधकज्ञानरहितमगृहीतग्राहि ज्ञान प्रमाणमिति प्रमाणलक्षण सूत्रयति । यद्यपीद सूत्र चोदनैकगम्यत्व धर्मस्य बोधयितु प्रवृत्तम्, न पुन. प्रमाणलक्षणमवगमयितुम्, परीक्षाशास्त्रस्यास्य लक्षणप्रतिपादने प्रयोजनाभावात्, तथापि सूत्रकारस्तत्र तत्र लक्षणपरतयापि सूत्राणि सूत्रयतीति प्रकृते प्रमाणलक्षणमपि सूचयतीति न दोष· ।

---

१. जैमिनि सूत्रम्-अ. १, पा १ अ.५.

२ "उपदेशो हि भवतिज्ञान तस्येति योग्यता ।
ज्ञायते येन तज्ज्ञानमेकाधिकरणत्वत· ॥"
अत्र भाष्यकारेण "औत्पत्तिकस्तु शब्दस्यार्थेन सम्बन्धस्तस्याग्निहोत्रादिलक्षणस्य धर्मस्य निमित्तमित्युक्त्वा (कथमि) ति प्रश्नानन्तरम्" उपदेशो हि भवति इति सौत्रमुपदेशपद व्याख्यात, तत्र न ज्ञायते केनास्य सम्बन्ध इति योग्यपदान्वय दर्शयति-उपदेश इति । तस्य धर्मस्योपदेशो ज्ञान प्रमाणमिति । ननूपदेशो ग्रन्थसन्दर्भात्मा, ज्ञान चार्थावग्रहः कथमनयो समानाधिकरण्यमत आह-ज्ञायत इति । भावसाधनो हि ज्ञानशब्दो नोपदेशशब्देन सामानाधिकरण्य लभते । अयं तु ज्ञायतेऽनेनेति करणसाधन इति युक्त सामानाधिकरण्यमिति ।
—मीमासाश्लोकवार्त्तिकम्-काशिका टीका अ.१ पा.१, अ-५, पृष्ठ-४, श्लोक ६.

३. "औत्पत्तिकगिरा दोष. करणस्य निवार्यते ।
अबाधो व्यतिरेकेण स्वतस्तेन प्रमाणता ॥
सर्वस्यानुपलब्धेऽर्थे प्रामाण्य स्मृतिरन्यथा ॥"
—श्लोकवार्त्तिकम्, औत्पत्तिकसूत्रम् श्लोक १०-११.

चोदनासूत्रे स्वत. प्रमाण्यनिरूपणावसरे भट्टपादा. सूत्रारूढ प्रमाणलक्षण परिकृत्य वर्णयन्ति-दृढमविसवादि गृहीतार्थग्राहक प्रमाणमिति । यज्ज्ञान ज्ञानान्तरेण न विसवाद्यते, न वा बाध्यते, नापि वा सन्दिग्धार्थबोधक तदेव ज्ञान प्रमाणम् । इदमत्र वार्त्तिकम्—

"तस्माद्दृढं यदुत्पन्नं न विसवादमृच्छति ।[1]
ज्ञानान्तरेण तज्ज्ञानं प्रमाणमिति मीयताम् ॥"

अस्य लक्षणस्य धारावाहिकज्ञानेष्वव्याप्ति दर्शयति शालिकनाथ—धारावाहिकोत्तरज्ञानाना पूर्वप्रतीतार्थविषयतया प्रामाण्य न स्यादिति । अनधिगतः काल उत्तरज्ञानाना विषय इति नाप्रामाण्यमिति चेत्—सन्नपि कालभेदो न प्रत्यक्ष इति वदति । प्रकारान्तरेण च धारावाहिकज्ञानानामुत्तरेषा प्रमाण्य प्रतिपादयति । तस्यायमाशय —धारावाहिकज्ञानेषूत्तरेषा ज्ञानाना कालविशेषस्याधिवयेन प्रामाण्यवर्णन न घटते, अवेद्यत्वात्क्षणादे कालविशेषस्य । किन्तु पूर्वाविज्ञानकारणकलापे व्याप्रियमाणे सत्येवोत्तरेषामुत्पत्तिः । तानि च परस्पर नातिशेरते, न वा तेषा सापेक्षत्वम् । तस्मादनुभूते प्रमाणत्वात्, तस्याश्च द्वितीयादिज्ञानेषु सत्वेन तेषा प्रमाण्ये न काप्यनुपपत्तिरिति ।[2]

अत्राय विषयविवेकः—भाट्टाः धारावाहिकज्ञानाना प्रामाण्य तावत्स्वीकुर्वन्ति । पर तदुपपादनप्रकारो भिन्न । तथाहि एकमेव विषयमवलम्ब्य यत्र चिरकालपर्यन्त तैलधारावदविच्छेदेन अय घट, अय घट इति ज्ञान जायते, तदेव धारावाहिकज्ञानमित्युच्यते । तत्रानधिगतार्थबोधत्व प्रमाणलक्षणमभिदधानाना भाट्टाना द्वितीयादिज्ञानेषु प्रथमज्ञाने विषयीकृतस्यैव घटस्य भानात्कथ प्रामाण्यमित्याशङ्क्य—

"न सोऽस्ति प्रत्ययो लोके यत्र कालो न भासते"[3] इत्यभियुक्तोत्या सर्व

---

१. श्लोकवार्त्तिकम् २.८०, अत्र 'दृढमित्यनेन सशयस्य व्युदासः, यदुत्पन्नमित्यनुत्पत्तेः विसवादमृच्छतीति विपर्ययस्य ।

२. "धारावाहिकेषु तर्ह्युत्तरविज्ञानानि स्मृतिप्रमोषादविशिष्टानि कथ प्रमाणानि तत्राह "अन्योन्यनिरपेक्षास्तु धारावाहिकबुद्धयः व्याप्रियमाणे हि पूर्वविज्ञानकरणकलाप उत्तरेषामप्युत्पत्तिरिति न प्रतीतित उत्पत्तितो वा धारावाहिकविज्ञानानि परस्यातिशेरत इति युक्ता सर्वेषामपि प्रमाणता ।"

—प्रकरणपञ्चिका पृष्ठ, १२६ बृहती पृष्ठ. १०३.

३. श्लोकवार्त्तिकम्—

"नन्वेव धारावाहिकेषूत्तरेषा पूर्वगृहीतार्थविषयकत्वादप्रमाण्य स्यात् ।

ज्ञान स्वाधिकरणक्षणावच्छिन्नमेव स्वविषय गृह्णाति । अस्मिन् क्षणे मया घट उपलब्ध, प्रातरारभ्यैतावत्कालपर्यन्त घटमहमुपलभे इत्यादि व्यवहारे कालः प्रत्यक्ष एव ।' अत. कालविशेषस्याधिक्यात् सिध्यति प्रामाण्य द्वितीयादिज्ञानानामिति पार्थसारथिमिश्रो व्यवस्थापयामास ।

नैयायिका अपि-प्रमाकरण प्रमाणम् । प्रमात्व च यथार्थानुभवत्वम् । याथार्थ्यञ्च तद्विशेष्यकत्वावच्छिन्नतत्प्रकारकत्वम् । तथा च सम्यगनुभवसाधन प्रमाणमिति निर्गलितम् अनुभवत्वन्तु 'अनुभवामि' इति प्रतीतिसिद्धः साक्षात्कारानुमित्युपमितिशाब्दबोधसाधारणः स्मृतिव्यावृत्तो जातिविशेष, न त्वगृहीतग्राहित्वम्, तस्य धारावाहिकेऽव्याप्तेरिति वदन्ति ।[1]

अत्र कुतूहलवृत्तिकारा. श्री वासुदेवदीक्षिता धारावाहिकज्ञानस्य पार्थसारथ्युक्तदिशा प्रामाण्यमुपवर्ण्यान्यथापि प्रामाण्य प्रसाधयन्तोऽव्याप्तिमेव परिहरन्ति—"अनुभवामि" इति प्रतीतिः साक्षात्कार एव भवति, न त्वनुमित्यादौ । 'पर्वते वह्निमनुभवामि' इत्यनुमितिस्थले न प्रतीति', किन्तु वह्निमनुमिनोमि, इत्येव । अतोऽनुभवामीति प्रतीति नानुमित्युपमितिशब्दसाधारणी । एवं

तस्मात् 'अनुभूति प्रमाणलक्षणम् ।......तस्मात् यथार्थमगृहीतग्राहिज्ञान प्रमाणमिति वक्तव्यम् । धारावाहिकेष्वप्युत्तरोत्तरेषा कालान्तरसम्बन्धस्यागृहीतस्य ग्रहणाद् युक्त प्रामाण्यम् । सन्नपि कालभेदोऽतिसूक्ष्मत्वान्न परामृश्यत इति चेत्, अहो सूक्ष्मदर्शी देवानाम्प्रिय. । यो हि समानविषयया विज्ञानधारया चिरमवस्थायोपरत. सोऽनन्तरक्षणसम्बन्धितयार्थ स्मरति । तथाहि-किमत्र घटोऽवस्थित इति पृष्टः कथयति-अस्मिन् क्षणे मया उपलब्ध इति । कालभेदे त्वगृहीते कथमेवं वदेत् । तस्मादस्ति कालभेदस्य परामर्श. । तदाधिक्याच्च सिद्धमुत्तरेषां प्रामाण्यम् ।" शास्त्रदीपिका पृ० ४६

१. "अनधिगतार्थगन्तृत्व च धारावाहिकविज्ञानानामधितार्थगोचराणा लोकसिद्धप्रमाणभावाना प्रमाण्य विहन्तीति नाद्रियामहे । न च कालभेदेनानधिगतगोचरत्व धारावाहिकानामिति युक्त परमसूक्ष्माणा कालकलादिभेदानां पिशितलोचनैरस्मादृशैरनाकलनात् । न चाद्येनैव विज्ञानेनोपदर्शितत्वादर्थस्य प्रवर्तितत्वात् पुरुषस्य प्रापितत्वाच्चोत्तरेषामप्रमाण्यमेव ज्ञानानामिति वाच्यम् । न हि विज्ञानस्यार्थप्रापण प्रवर्तनादन्यद्, न च प्रवर्तनार्थं प्रदर्शनादन्यत् । तस्मादर्थप्रदर्शनमात्रव्यापारमेव ज्ञानं प्रवर्तक प्रापक च । प्रदर्शन च पूर्ववदुत्तरेषामपि विज्ञानानामभिन्नमिति कथं पूर्वमेव प्रमाण नोत्तरव्यापि?"

—न्यायवार्त्तिकतात्पर्यटीका १ अ. १, आ. १, सू. १., प्र. पृ.२१

चानधिगतार्थगन्तृत्वापरपर्यायागृहीतग्राहित्वमेवानुभवत्वम् । न च धारावाहिकेऽव्याप्तिः, धारावाहिकेस्थले तावत्कालव्यापिन्येकेन ज्ञानव्यक्ति, कारणभेदाभावात्, भेदकल्पने च मानाभावात् । अतो नाव्याप्तिरिति ।[1]

वेदान्तपरिभाषाकारोऽपि रूपरहितस्यापि कालस्येन्द्रियवेद्यत्वमभ्युपगत्य धारावाहिकज्ञाने पूर्वपूर्वज्ञानाविषयतत्तत्क्षणविशेषविशिष्टविषयकत्वेनाव्याप्ति परिहृत्य "किंच सिद्धान्ते धारावाहिकबुद्धिस्थले न ज्ञानभेदः, किन्तु यावद्घटस्फुरण तावद्घटाकारान्तःकरणवृत्तिरेकैव" इति वदन् पूर्वोक्तामव्याप्ति निराकरोति ।[2]

नीतितत्वाविर्भावे चिदानन्दः परत्वापरत्वयौगपद्यायौगपद्य-चिरक्षिप्रादिप्रत्ययैर्लिङ्गै. कालस्यानुमेयत्व निराकृत्य 'काल प्रत्यक्ष, अमनस्त्वे सति विभुत्वात् इत्यनुमानेन तस्य प्रत्यक्षत्व प्रसाध्य धारावाहिकज्ञाने कालभेदस्याधिकस्य वेद्यत्व व्यवस्थापयन्नव्याप्ति परिहरति ।[3]

प्रमाणलक्षणे "दृढ" पद सशयनिवृत्यर्थमिति भाट्टा अभिप्रयन्ति । सशयश्च—

**"नानाकोट्यवलम्ब्येकप्रत्ययस्संशयो मतः ।**
**साधारणविशेषाभ्यां विवादेन च स त्रिधा ।।"** इति

लक्षणलक्षित. । महर्षिगौतमः—

"समानानेकधर्मोपपत्तेर्विप्रतिपत्तेरुपलब्ध्यनुपलब्ध्यव्यवस्थातश्च विशेषापेक्षो विमर्शस्सशय." (गौतम सूत्र १.१.२३) इति सशयसामग्री सूत्रयति । तत्र विशेषापेक्षोविमर्शः इति सूत्राशेनानवधारणज्ञान सशयसामान्यलक्षणम् । एकधर्मिविशेष्यकविरुद्धनानाधर्मप्रकारकज्ञान सशयः । सूत्रस्यायमर्थ'-उपपत्तिशब्दो लक्षणया प्रतीतिपरः । समानधर्म.—साधारणधर्म तत्प्रतीति' सशयहेतु. । 'अनेक धर्मोपपत्ते' रिति पदस्य द्वेधा व्याख्यान न्यायवार्त्तिके दृश्यते-अनेकस्य धर्मः, अनेकस्माद्वाधर्मोऽनेकधर्म इति । तत्रानेकप्रत्ययहेतुधर्मस्तस्य प्रतीतेरित्यर्थः सम्पन्न' । यथा —शब्दस्य विभागजत्वम् । अत्र सामान्यादिभ्यस्सत्तादिना विशेषेणविभक्तशब्दो द्रव्य गुणः कर्म वेति विभागजत्वात्सशयो भवति । द्वितीयविग्रहे-अनेकस्माद्व्यावृत्तो धर्मोऽनेकधर्म, असाधारणधर्म' तस्य प्रतीतिरित्यर्थः । उभयत्रापि पक्षे शाकपार्थिवादित्वादुत्तरपदलोपी समास । द्वितीयस्योदाहरणम्—प्रत्यक्षोवायु. स्पर्शवत्वात् पृथिवीवत्, अप्रत्यक्षो वायु' अरूपवत्वाद्गगनवदिति ।

---

१. मीमांसादर्शनं, अध्वरमीमासा (प्रथमो भागः) कुतूहलवृत्तिः पृ०-६
२. वेदांतपरिभाषा प्रत्यक्ष परिच्छेद. पृष्ठ-२६
३. नीतितत्वाविर्भाव. पृष्ठ-४१ (कालप्रत्यक्षतावाद.)

विप्रतिपत्तेस्संशयहेतुत्वम्—नित्यश्शब्द इति केचित्, अनित्यश्शब्द इत्यपरे इत्यादौ। उपलब्ध्यनुपलब्ध्यव्यवस्थातः, उपलब्धिः प्रमाणम्। अनुपलब्धिः बाधकम्। तयोरभावोऽत्राव्यवस्था। ततस्संशयः।

श्रीमन्तोऽप्पय्यदीक्षिता. "तत्तु समन्वयात्" इति सूत्रे कल्पतरुपरिमले अनेकशब्दस्य धर्मपदेन समासे शाकपार्थिवादिवदुत्तरपदलोपेनानेकस्मात् सजातीय विजातीयाद्व्यावृत्तोऽसाधारणो धर्म इत्यर्थेनैकधर्मलाभः' इति कथयन्तो द्वितीयमेव पक्ष स्वीकुर्वन्ति। प्रथमः पक्ष. प्राचीनानाम्, द्वितीयश्च।र्वाचीनानामित्यनुमातव्यं भवति।[1]

"सामान्यप्रत्यक्षाद्विशेषाप्रत्यक्षाद्विशेषस्मृतेश्च सशयः" इति काणभुजं सूत्र व्याचक्षाण· शकरमिश्रः भाष्यवार्त्तिकमतयोस्साधारणधर्मेण गतार्थतां मन्वानः साधारणधर्मस्यैव सशयसामग्रीमभिप्रैति।[2]

अख्यातिवादिनः प्राभाकरास्तु सशयस्थले 'स्थाणुर्वा पुरुषो वे' त्यादौ एक विज्ञान नोदेति, किन्तु द्वे एते विज्ञाने विशेषस्मरणरूपे। तयोः स्मर्यमाणस्थाणुत्वपुरुषत्वयोरेकस्यापि पुरोवर्तिन्यनिर्धारणादेकान्ततो व्यवहार प्रतिपत्ता प्रवर्तयितुमशक्नुवन् सशयित इव भवति। अतः स्मृतिद्वयरुपस्य संशयस्य गृहीतग्राहित्वादेव प्रामाण्य निरस्तमिति दृढपदमनावश्यकमित्यभिप्रयन्ति। शुक्तिकाया रजनमिति ज्ञान प्रतिबिम्बज्ञानं च निवर्तयितु लक्षणे-विसवादिग्रहणम्। प्रतिबिम्बज्ञान नाम मणिकृपाणदर्पणजलादौ भासमानं मुखादिज्ञानम्। इमानि हि ज्ञानानि अर्थव्यभिचारीणि तेषा व्यावृत्यर्थमविसवादिग्रहणम्। एवं च कारणदोषवाधकज्ञानरहितमगृहीतग्राहिज्ञानं प्रमाणमिति सिद्धम्।

---

१. कल्पतरुपरिमले, पृष्ठ-१५२

२. "समानेतन्त्रे गौतमीये 'इत्यादिना' संशयत्वाच्छिन्नकार्यं प्रति समान—धर्मत्वेनैव कारणतायाः कल्पनात्। तथा च संशयो न पञ्चविधः, न वा त्रिविधः, कित्वेकविध एव' इत्यन्तेन ग्रन्थेन।

—वैशेषिक उपस्कारः पृष्ठ-१०८.

## चतुर्थः परिच्छेदः

# "मीमांसकसम्मतानि प्रमाणानि तद्विभागश्च"

### भाट्टमतेन प्रत्यक्षम्

अथेदानी मीमासकसम्मतानि प्रमाणानि तद्विभागश्च प्रस्तूयन्ते। सूत्रकारो जैमिनिः कण्ठत प्रत्यक्षमनुमान शब्दश्चेति त्रयाणा प्रमाणाना नाम गृह्णाति[1] न तु लक्षयति। सूत्रस्य लक्षणपरत्वे 'चोदना लक्षणोऽर्थो धर्मः' इत्यस्याः प्रतिज्ञाया भङ्ग स्यात्। निष्प्रयोजन च शाब्दप्रमाणाधिकारे प्रत्यक्षलक्षणकथनम्। यदि चानुक्तस्वरुपस्य प्रत्यक्षस्य धर्मे निमित्तत्वमेव प्रतिपादयितु न शक्यते ततस्तल्लक्षणकथन प्रयोजनवदित्युच्यते तर्हि अनुमानादेरपि लक्षणं वक्तव्यमापतेत् लोकसिद्धप्रमाणव्यवहारिणो मीमासकस्य तल्लक्षणकरणञ्चायुक्तमेव। अतो धर्मे निमित्तत्वकथनपरमेवैतत्सूत्रम्। भाष्यकारशबरस्वामी तु वृत्तिकारमतनिरुपणमिषेण उपमानमर्थापत्तिमनुपलब्धि च त्रीणि प्रमाणानि निरूपयति। तथा च मीमासकेषु भाट्टा षट् प्रमाणानि-प्रत्यक्षमनुमान शब्द उपमानमर्थापत्तिरनुपलब्धिश्चेति स्वीकुर्वन्ति।

तत्र पदार्थस्साक्षादिन्द्रियाणा सन्निकर्षे सति जायमान ज्ञान प्रत्यक्षमिति[2]

---

१. (अ) "सत्सम्प्रयोगे पुरुषस्येन्द्रियाणा बुद्धिजन्म सत्प्रत्यक्षम्"

जैमिनिसूत्रम् १.१ ५.

(आ) "अपि वा कर्तृसामान्यात् प्रमाणमनुमान स्यात्"

जैमिनि सूत्रम् १.३.२

(इ) "औत्पत्तिकस्तु शब्दस्यार्थेन सह सम्बन्ध तस्य ज्ञाननुपदेश"

—जैमिनिसूत्रम् १.१.५.

२. "इन्द्रियार्थसन्निकर्षोत्पन्न ज्ञानमव्यपदेश्यमव्यभिचारि व्यवसायात्मकं प्रत्यक्षम्।"

—(गौ० सू० १ १.४) इति गौतमसूत्रम्।

प्रत्यक्षलक्षणपरम्। अत्र ज्ञान प्रत्यक्ष प्रमाणमित्येव पर सूत्र, प्रामाणाधिकारात्। भाष्यकारो, वात्स्यायन उद्योतकराचार्यो वार्त्तिककार टीकाकारो वाचस्पतिमिश्रश्च "यतस्तदि' ति यत्तच्छब्दयोरध्याहारेणेन्द्रियप्रमाणपरकतया व्याचख्युः। विश्वनाथोऽपि

परेषामिवामीषामपि सम्मतम् । तथा च प्रत्यक्षज्ञानकारणभूतानि चक्षुरादीनि मनोऽन्तानि षडिन्द्रियाणि ।

इन्द्रियार्थसन्निकर्षविषये नैयायिकैस्सह मीमासका विप्रतिपद्यन्ते । सयोग:, संयुक्तसमवाय:, संयुक्तसमवेतसमवाय:, समवाय:, समवेतसमवाय:, विशेष्य-विशेषणभाव इति नैयायिकै स्वीकृतेषु षट्सु सन्निकर्षेषु आदितस्त्रीनेव समवायस्थाने तादात्म्यमिति व्यवहरन्तो मीमासका अभ्युपगच्छन्ति । आकाशगुणस्य शब्दस्य ग्रहणाय श्रोत्रस्य समवायो नैयायिकानाम्,[1] मीमासकानान्तु दिग्रूपत्वेन श्रोत्रस्य शब्दस्य च[2] द्रव्यत्वेन तद्ग्रहणाय सयोगस्यैव सम्भवात्समवायो नापेक्षित: । शब्दवृत्तिसामान्यस्य सयुक्ततादात्म्येनैव निर्वाह इति न समवेत-समवायोऽप्यपेक्षितो मीमांसकानाम् । अभावस्यानुपलब्धिप्रमाणगोचरत्वेन तदर्थं विशेष्यविशेषणभावो नोपस्यते मीमासकै । एव च षडिन्द्रियात्मक त्रिसन्निकर्षमेतन्मते प्रत्यक्षम् ।

प्रत्यक्ष निर्विकल्पकसविकल्पकभेदेन द्विविधम् । तत्र सविकल्पक प्रत्यक्ष लौकिकमलौकिक चेति द्वेधा विभज्य लौकिके षोढा सन्निकर्षा अलौकिके च समानधर्मरूपो ज्ञानधर्मरूपो योगजधर्मरूपश्चेति त्रयस्सनिकर्षा नैयायिकैरङ्गी क्रियन्ते ।

---

वृत्ताविममेव पन्थानमनुसरति । अव्यपदेश्यम् अव्यभिचारि व्यवसायात्मकमिति त्रयाणा विशेषणाना शब्दकर्मतापन्ने 'इदम्' इति ज्ञाने, इदं रजतम् 'इत्यादौ विपर्यये, 'स्थाणुर्वा पुरुषो वा' इति सशये चातिव्याप्तिवारणाय सार्थकता । व्यपदिश्यते इति व्यपदेश्यमिति व्युत्पत्या व्यपदेश्यशब्द. शब्दकर्मतापन्न ज्ञानमभिधत्ते । तद् इन्द्रियार्थसन्निकर्षादुत्पन्न सत् विषयनाम्ना व्यपदिश्यते—रूप ज्ञान रसज्ञानमिति तद्व्यपदेश्यपद विशेषणमिति भाव ।

१. भाट्टा: 'दिश: श्रोत्रम्' (तै० ब्रा० ३ ६ ६.) इति वाक्यं प्रमाणयन्त. दिगात्मक श्रोत्रमित्याचक्षते । अतएव भट्टपादा:—

"यदि ह्यवश्य कर्त्तव्य. तार्किकोक्तिविपर्यय ।
ततो वेदानुसारेण कार्या दिक्छ्रोत्रता मति: ॥"

—श्लोक वार्तिकम्

"यावाश्च कणभुड् न्याय नभोभागप्रकल्पने ।
दिग्भागेऽपि समस्तोऽसावागमात्तु विशिष्यत " इति

—श्लोक वार्तिकम्

२. मानमेयोदय पृष्ठ-१४-१६.

तत्रानुमानहेतोर्व्याप्तेरवगमकाले महानसवृत्तोधूम एव तादृशव्याप्तेर्गृहीतृत्वात् कालान्तरे पक्षवृत्तिधूमव्यक्त्यन्तरेणानुमतिर्नोपपद्यते । तस्या व्यक्तौ पूर्वं वह्निव्याप्तेरनवगतत्वादिति सकटमिद परिजिहीर्षवो नैयायिकाः महानसे यदा एकस्या धूमव्यक्तेः प्रत्यक्षं तदा कालान्तरवृत्तीना सर्वासामेव धूमव्यक्तीनां प्रत्यक्षमिति परिकल्प्य, तासु च तदानीमेव वह्निव्याप्तिरपि गृहीता भवतीति स्वीकुर्वन्ति । तत्रानुमितेरपि प्रत्यक्षात्मकत्ववारणाय साक्षादिन्द्रियसन्निकर्षवन्तं पदार्थं विषयीकृत्य जायमान ज्ञानमेव प्रत्यक्षमिति सर्वेषा दार्शनिकानां नियम । सत्येव महानसवृत्तिधूमप्रत्यक्षे यथा सन्निकर्ष· सयोग. तथा तत्काले जायमानधूमान्तरप्रत्यक्षेऽपि केनचन सनिकर्षेण भवितव्यम् । एतत्कृते समान्यलक्षणस्सनिकर्ष कल्प्यते । इन्द्रियेण साक्षात्सम्बद्धे धूम·, तद्वृत्तिसामान्य धूमत्वम्, एतच्च देशान्तरकालान्तरवृत्ति सर्वधूम व्यक्तिपु वर्तत इति एतादृशसामान्यद्वारा तादृशधूमान्तरव्यक्तीनामपि सन्निकर्षवत्वान्महानसधूमप्रत्यक्षकाले सयोगरुपसन्निकर्षेण तस्येव तादृशसामान्यरुपसन्निकर्षेणान्यासामपि धूमव्यक्तीनां प्रत्यक्षविषयत्वमुपपद्यते ।

एव चक्षुस्सन्निकृष्टे चन्दनखण्डे सुरभिचन्दनमिति प्रत्यक्ष जायते । तत्र संयोगसन्निकर्षेण पार्थिवद्रव्यस्य चन्दनस्य प्रत्यक्षविषयत्वे उपपद्यमाने चक्षुरिन्द्रियाग्राह्यस्य सौरभस्य तन्नोपपद्यते । अतो द्रव्यग्रहणकाले यथाकथमप्युपस्थितस्य सौरभस्य साक्षाच्चक्षु सन्निकृष्टचन्दनप्रत्यक्षे मानमङ्गीकर्त्तव्यम् । विना च सन्निकर्षमेतदयोगात् क्लृप्तसन्निकर्षेष्वन्यतमस्याप्यसम्भवाच्च तदुपस्थितिरेव तत्र सन्निकर्ष इति ज्ञानरूपोऽयमावश्यकस्सन्निकर्ष· । तथा चक्षुरादीन्द्रियपथमतिक्रान्तेऽपि वस्तुनि योगिना प्रत्यक्षोदयात्तन्निर्वाहाय योगजधर्मोऽपि सन्निकर्ष इति नैयायिकानामाशयः ।

तदिद मीमांसका न मन्यन्ते । अमीषामयसभिसन्धिः—यत्र यस्याव्यक्तेस्नुमितिः तत्र व्याप्तिसम्पत्तये तया व्यक्त्याऽनुभूतपूर्वया भवितव्यमिति न निर्बन्धः, येन तदनुरोधेन यत्र यत्र धूमस्तत्र तत्र वह्निरिति, यो यो धूमवान् स सोऽग्निमानिति वाऽनुमानोपयुक्ताया व्याप्ते· स्वरूपमभ्युपयन्तस्तादृशव्याप्तिग्रहणाय सामान्यलक्षणा प्रत्यासत्तिमनुमन्येमहि । अपितु यज्जातीयेनानुमान तज्जातीयस्य यत्र यत्र धर्मिणि दर्शनं तत्र तत्र नियत लौकिकप्रत्यक्षगम्यं साध्यसजातीयसामानाधिकरण्य व्याप्तिः । इयमेव चानुमानोपयोगिनी इय च यस्य यावन्ति सम्भवन्ति तस्य[1] तावद्भिर्भूयोदर्शनै लौकिकप्रत्यक्षात्मकैरेव दृष्टेषु धर्मिषु व्यभिचारादर्शनसहकृतैरवगम्यत इति न कार्य सामान्यलक्षणप्रत्यासत्या ।

---

१. श्लोकवार्त्तिकम्—

एवं प्राक्तनसौरभानुभवजनितसंस्कारसचिवेनेद्रियसन्निकर्षेण सुरभिचन्दन-मिति प्रत्यक्षे उपपद्यमाने न तत्र सन्निकर्षान्तरस्वीकारावश्यकता। तत्र सौरभांशे स्मृतित्वमितरांशे चाक्षुषानुभवत्वमिति पर विशेषः। प्रत्यभिज्ञायां ह्ययमशस्स-वभ्युपगतः। यथा प्रमास्वप्यशतः प्रमात्वम्, सशयेष्वंशतो निश्चयत्वम् तथाऽ-त्राप्यंशभेदेन विरुद्धधर्मसमावेशे न किमपि हीयत इति। तथा यदुच्यते योगिना-मसन्निकृष्टप्रत्यक्षमिति तत्र तादृशयोगिनामप्रसिद्धिरिति केचिदूचुः, केचिच्च मीमांसकाः अनुभूतस्यैव योगिना निरन्तरचिन्तनात्मकभावनाविशेषेणोपस्थितिः, न त्वननुभूतस्येति योगिनां भावनाबलज ज्ञान स्मृतिरेवेति स्वीचक्रु र्न तु प्रत्यक्षमिति।

भाट्टचिन्तामणिकारो गागाभट्टस्तु[1] अत्राद्यसन्निकर्षद्वयजन्यमलौकिकप्र-त्यक्षमङ्गीकरोति। तत्र ज्ञानलक्षणाङ्गीकारे युक्तिमुपस्थापयति यत्तदनङ्गीकारे एकत्र घटव्यक्तौ घटपदस्य शक्त्यवगतौ तस्मात्पदाद् घटान्तरबोधो न स्यादिति। अत्र किमसौ पदाना जातौ शक्तिरित्याकृत्यधिकरणसिद्ध न्यायं व्यस्मार्षीत् ? अथवा मीमासकमतानुरोधेनापीयमापत्तिस्सम्भवति ? इति चिन्तनीयम्।

## (ख) "प्रभाकरमतेन प्रत्यक्षम्"

शालिकनाथस्तु "साक्षात्प्रतीतिः प्रत्यक्षम्[2] इति लक्षणमभिदधाति लक्षण-घटकम् साक्षात्त्वम्स्वेनरुपेण मानम्, स्वोत्पत्तौ स्वविपयानन्तर्गतार्थान्तिरज्ञानान-पेक्षस्वभावम्, स्वकालाकलितवस्तुसत्तावबोधकत्वञ्चेति त्रेधा भवति। तत्र प्रथमपक्षे-अनुमाने लिङ्गादिसम्बन्धितारूपेण वस्तुनो भानमिति न तत्र साक्षात्वम्, अतो न व्यभिचारः। सविकल्पप्रत्यक्षे नामादिरूपतो वस्तुनो भानमनुभूयते न स्वेन रूपेण, तथापि स्वरूपतो भानमस्तीति नाव्याप्तिः। द्वितीयपक्षे सविकल्पकज्ञानस्य निर्विकल्पकसापेक्षत्वेऽपि स्वविषयानन्तर्गतार्था-न्तरविपयत्वाभावान्न व्यभिचारः। तृतीयपक्षे-अनुमानादिक व्याप्तिकालावच्छि-न्नवस्तुसत्तावबोधकस्वभावमिति न प्रत्यक्षम्। अतस्साक्षात्प्रतीति प्रत्यक्षमित्येव लक्षणमिति।

तत्र प्रभाकरमते-घटचक्षुस्संयोगे जाते नैयायिकानामिव 'अय घट' इति व्यवसायात्मक ज्ञान न स्वीक्रियते, किन्तु "घटमह जानामि" इत्यनुव्यवसायात्म-कमेव ज्ञानमभ्युपच्छन्ति। ज्ञान ज्ञाता ज्ञेयम्, मितिः माता, मेयम् इति चैतत्त्रितय त्रिपुटीत्यभिधीयते। सर्वेपु ज्ञानेष्वात्मा कर्तैव, न तु कर्म परसमवेतक्रियाफलशालित्व कर्मणो लक्षणम्। अतस्स जडो भवति। घटादि-

---

१. भाट्टचिन्तामणिः—तर्कपाद. पृष्ठ-१५-१६.

२. प्रकरणपञ्जिका पृष्ठ-१४६

विषयस्तु जड एव। यदि ज्ञानमपि जड स्यात्तर्हि समस्तस्य जगत आन्ध्य प्रसज्येत । तस्माज्ज्ञानं स्वयप्रकाशम् अर्थात्मनो प्रकाशक च । तच्च ज्ञानमाश्रयविधयात्मानम्, विषयविधया च घटादिकं प्रकाशयति ।

अत्रापि मतद्वयमुपलभ्यते-आद्यमते ज्ञानं यद्यपि न स्वात्मानं विषयीकरोति, न वाऽऽत्मानम्, तथापि तादात्म्येन स्वस्मिन् व्यवहार प्रयोजयति, स्वसमवायेन आत्मनि च व्यवहारं प्रयोजयति । इदमेव प्राचीनप्रभाकरमतमिति व्यवह्रियते । द्वितीयमते-ज्ञान स्व स्वाश्रयञ्च विषयीकुर्वत् स्वव्यवहारम्, स्वाश्रयव्यवहारञ्च प्रयोजयतीति । एतदेव नव्यप्राभाकरमतं शालिकनाथसम्मतञ्च ।[1] एतन्मतेऽपि सन्निकर्षास्त्रय एव, किन्तु-सयोग· संयुक्तसमवाय·, समवायश्चेति भेदः । अन्यत्सर्व समानम् ।

## (आ) "अनुमानम्"

"अनुमान[2] ज्ञातसम्बन्धस्यैकदेशदर्शनादेकदेशान्तरेऽसन्निकृष्टेऽर्थेबुद्धिः" इति शाबर भाष्यम् । पक्षधर्मिण्येकदेशिनि पर्वतादौ एकदेशदर्शनात्धूमाद्यात्मलिङ्गरुपैकदेशदर्शनात्, एकदेशान्तरे वह्न्याद्यात्मकलिङ्गरूपैकदेशान्तरे, असन्निकृष्टेइन्द्रियसन्निकर्षाभाववत्यर्थे या बुद्धिरुत्पद्यते तदनुमानमित्यर्थ· साध्येन हेतोस्सम्बन्धो व्याप्तिलक्षण. । सा च व्याप्तिर्भूयोदर्शनेन गृह्यते ।

---

१. प्रकरणपञ्चिका पृष्ठ-१४७.

२. अत्र सम्बन्धपदेन सयोगसमवायादयो न गृह्यन्ते । ते गम्यगमकभावे न प्रयोजका:, कृत्तिकारोहिण्युदयादीना पूर्वोक्तसम्बन्धाभावेऽपि लिङ्गलिङ्गिभावदर्शनात् । अपि च कार्यमपि न कार्यत्वाकारणं गमयति, किन्तु तेन नियतत्वात् । अन्यथा कार्यमस्तु कारणञ्च मानुमापयत्वित्यपि वक्त् शक्यते । यतस्तु तेन नियतस्ततो नुमापयतीति स एवानुमानागम·, स एव च व्याप्तिशब्देनाभिधीयते । तदुक्तं वार्तिककारैः—

"सम्बन्धो व्याप्तिरिष्टात्र लिङ्गधर्मस्य लिङ्गिना" इति

(श्लोकवार्तिकम्, अनुमानपरिच्छेद: पृष्ठ-३४९)

अत्र-अनुमानव्यवहारे, व्याप्तिलक्षणस्सम्बन्धो लिङ्गमित्यर्थ: । स च व्याप्तिलक्षणस्सम्बन्धः न सयोगवदुभयसमवेत, येन धूमवदग्नेरपि गमकत्वमापद्येन । इदमुक्त वार्त्तिककारै.—

"व्याप्यस्य गमकत्व च व्यापक गम्यमिष्यते ।।"
यो यस्य देशकालाभ्यां समो न्यूनो पि वा भवेत् ।
स व्याप्तो व्यापकस्तस्य समो वाऽभ्यधिको पि वा ।।५।। इति

(श्लो० वा० अनुमानपरिच्छेद: पृष्ठ-३४९)

"सम्बन्धो व्याप्तिरिष्टात्र लिङ्गधर्मस्य लिङ्गिना।
× × × ×
× × × ×
भूयो दर्शनगम्या च व्याप्तिः सामान्यधर्मयोः।
ज्ञायते भेदहानेन क्वचिच्चापि विशेषयोः ॥११॥
(श्लोकवार्त्तिकम्-अनुमानपरिच्छेदः पृष्ठ-३४८-३५०)

इति वार्त्तिकात्। 'व्याप्तिस्मृतिपक्षधर्मताज्ञानजन्य ज्ञानमनुमितिरित्येव लक्षण सम्पन्नं भवति।' तदिदम्–अन्वयव्यतिरेकि केवलान्वयि चेति द्विविधम्। केवलव्यतिरेकीति नैयायिकाभिमतो विभागो मीमासकैर्नेष्यते। अत्र प्रकृत-पक्षादन्यत्राप्रसिद्धस्यैव पदार्थस्य साध्यत्व वक्तव्यम्। एतस्मिश्चानुज्ञायमाने-दृष्टाद्यलौकिकार्थानामप्यनुमानविषयत्व प्रसज्येतेति बिभ्यतो मीमांसकास्तन्नि-रसने प्रयस्यन्ति।

परार्थानुमाने नैयायिकैः स्वीकृतेषु पञ्चस्ववयवेषु[2] त्रयाणामेवावश्यकता-

---

अतएव न हिंसात्वमधर्मत्वप्रयोजकम्, किन्तु निषेध्यत्वमेव। अनिष्टानु-बन्धिता न हिंसात्वप्रयुक्ता, अपि तु निषेधप्रयुक्तेति मीमासका। सर्वमिदं वार्त्तिकेऽभिहितम्—"व्याप्तेश्च दृश्यमानायाः कश्चिधर्म प्रयोजक."—इत्यादिना। एव लक्षणघटकसम्बन्धपदस्य व्याप्तिरूपत्वे पार्थसारथि-मिश्रेण 'यस्य यादृशस्य तेन यादृशेन सह साक्षाद्वा वा प्रणाल्या-यादृशसम्बन्ध.-सयोग, समवाय', एकार्थसमवायः, कार्यकरणत्वमन्यो वा सयोगादिरूपा सम्बन्धा. कीर्तिता'। तत्किमभिप्रायकमिति न ज्ञायते।

१. व्याप्तिज्ञान-पक्षधर्मताज्ञानयोरनुमितिकारणता, विशिष्टवैशिष्ट्यावगाहि-ज्ञानस्य च यथासम्भव कारणता।

२. "केचित्पञ्चतय प्राहुर्द्वयमन्ये वय त्रयम्।
उदाहरणपर्यन्तं यद्वोदाहरणादिकम् ॥" इति
वार्त्तिकम्। "प्रतिज्ञाहेतूदाहरणोपनयनिगमना अवयवाः" इति (न्याय सूत्रम्१ १.३२) प्रतिज्ञाहेतू द्वावेवावयवाविति सौगता'। त्र्यवयव साधन मीमासकैरङ्गीक्रियते प्रतिज्ञादित्रयम् अथवोदाहरणादित्रयम्। इन्द्रियका-माधिकरणे भाष्यकारः शबरस्वामी अथ यत्कर्म तत्फलवद्दृष्टम्-होमोऽपि कर्म, तेनापि फलवता भवितव्यम्' इति कथयन् उदाहरणादि-त्रयमङ्गीकरोति।

"वेदस्याध्यन सर्वं गुर्वध्ययनपूर्वकम्;
वेदाध्ययनसामान्यादधुनाध्ययन यथा॥ इति वदन् भट्टपादः प्रतिज्ञादित्रयमङ्गीकरोति।

मिमे पश्यन्ति प्रतिज्ञाहेतूदाहरणाना वा, उदाहरणोपनयनिगमनाना वेति। प्रतिज्ञा निगमनयो हेतूपनययोश्चैकेनान्यतरस्य चरितार्थतया समुच्चित्योभयोरेकत्रोपादाने पुनरुक्तिप्रसंग इत्यभिप्रायो मीमासकानाम् ।

तथा हेतुदोषा अपि त्रय एवात्र सम्मता -असिद्धोनैकान्तिकोबाधकश्चेति । बाधक एव विरुद्धापरपर्याय. । बाधितविषयत्वन्तु प्रतिज्ञादोषः पक्षदोषो वा, न तु हेतुदोष । यद्यपि कथञ्चिद्धेतुदोषत्वमप्युन्नेतु शक्यते, तथापि प्रतिज्ञोच्चारणानन्तरमेव हेतुनिर्देशात् प्रतिज्ञानिर्देशसमय एव बाधस्य स्फुरणसम्भवेन प्रतिज्ञादोषत्वमेव युक्तम्, न तु तदुपजीव्यपश्चादवगम्यमान हेतुदोषत्वमिति । सत्प्रतिपक्षितत्वन्त्वनैकान्तिकान्तर्भूतम् । अनैकान्तिकस्य साध्यसशयजनकतया दूषकता। तत्र यथा साधारणेन साध्यसशयो जायते तथा साध्यतदभावव्याप्यहेतुद्वयोपन्यासेऽपि । अतएवानैकान्तिको द्वेधा-सव्यभिचार॰ सप्रतिपक्षश्च । यत्तु नैयायिका॰ साधारणासाधारणानुपसंहारिभेदेनानैकान्तिक त्रेधाभिन्नमभिदधति, तत्र साधारण एव केवल सव्यभिचारपदाभिधानार्ह अनैकान्तिकान्तर्भूतः । असाधारणस्त्वसिद्धविशेष एव । यथेद तथोच्यते-हेतुस्वरूपस्य, पक्षे हेतुसम्बन्धस्य, पक्षैकदेशे तत्सम्बन्धस्य पक्षव्यतिरेकेण पक्षादन्यत्र तत्सम्बन्धस्य, पक्षस्यैव वा असिद्धचाऽसिद्धि. पञ्चधा भिद्यते । तत्र पक्षव्यतिरेकेण हेतोरसिद्धि व्यतिरेकासिद्धिरिति व्यवह्रियते । अयमेव चासाधारणो भवतीति । अन्ये तु सपक्षासत्व एव व्यतिरेकामिद्धिः, तत्सत्वे तु हेतुसाधारणो भवन् तुरीयो हेत्वाभासो भवतीति प्रतिपादयन्ति । नैयायिकसम्मतोऽनुपसहार्यपि व्यतिरेकासिद्ध एव । परमते विरुद्ध एवात्र बाधक इत्युच्यते ।

एवमेते 'त्रयश्चत्वारो'[1] वा यथासम्भवमवान्तरविभागवन्तो हेतुदोषा॰ । बाधश्च प्रतिज्ञादोष इत्यवोचाम । सोऽय, साध्यस्य प्रमाणान्तरेण परिच्छेदे, तदभावस्य तथा भावे, साध्यस्यैवाप्रसिद्धावपि वा भवतीति त्रेघा । एवमुदाहरणदोषा अपि साध्यवैकल्यसाधनवैकल्योभयवैकल्याश्रयहीनात्वादयो भवन्ति ।

## "प्रभाकर-मतम्"

प्राभाकराः भाष्यकारेण शबरस्वामिना निर्दिष्टेऽनुमानलक्षणे नियमपदमबाधितपद च सयोज्यानुमानलक्षण निर्दिशन्ति ।

**ज्ञातसम्बन्धनियमस्यैकदेशस्य दर्शनात् ।**
**एकदेशान्तरे बुद्धिरनुमानमबाधिते ॥**

इतिशालिकनाथ. ।[2]

---

१. श्लोकवार्त्तिकम् ?

२. प्रकरणपञ्चिका-पृष्ठ-१९६ ।

अत्र 'एकदेशस्य' 'एकदेशान्तरे' चेति द्वाभ्या शब्दाभ्या क्वचिदाश्रितौ हेतुसाध्यावुच्येते । ताभ्यामेक आश्रय आक्षिप्यते । अतः समानाश्रयाश्रितयोरेव द्वयोर्गम्यगमकभाव इति फलति । 'अन्तर' शब्दोऽपि पूर्वोक्तस्यैवार्थस्योपष्टम्भक. । भाष्यस्थम् सन्निकृष्टपद स्मरणाभिमाननिरासपरम् । 'सम्बन्धपदेन निरुपाधिकः सम्बन्धो[1] गृह्यते, सम्बन्धमात्रग्रहणे तादात्म्यादीनामपि बौद्धाभिमताना ग्रहणापत्तेः । 'दर्शन' पद निश्चयपरम् । तथा च समानाश्रयाश्रितयोरेकदेशिनोः ज्ञातसम्बन्धनियमस्यैकदेशस्य दर्शनादेकदेशान्तरे सन्निकृष्टेऽर्थे बुद्धिरनुमानमिति तल्लक्षण पर्यवस्यति ।

महानसादौ वह्निधूमौ सहचरितौ पश्यतः प्रथमदर्शन एव धूमस्य वह्निना सम्बन्धो गृहीतो भवति, भूयोदर्शनस्योपयोगः सोपाधिकत्वशङ्कानिरासमात्रम्[2] । गृहीतग्राहित्वमनुमानस्य प्राभाकरा इच्छन्ति । अग्नेर्धूमेन सह सम्बन्धो धूममात्रानुबन्धी । अतस्सम्बन्धमात्रावसायसमय एव यावद्धूमाधिकरणमग्निसम्बन्धस्यावगतत्वात् गृहीतग्राहित्वमनुमानस्य । तथापि प्रत्युत्पन्नकारणजन्यत्वेन धारावाहिकन्यायेन प्रामाण्यमनुमानस्य । यो यो धूमवान् स स वह्निवान् इति व्याप्तौ गृहीतायां धूमवत्सामान्ये वह्निसम्बन्धस्य ग्रहणात्, पर्वतस्यापि सामान्यान्तर्गततया तत्रापि वह्निसम्बन्धोगृहीत एवेति नाधिकमनुमानेन ग्राह्यमस्तीत्यनुमान

---

१. निरुपाधिकसम्बन्धो व्याप्तिरिति प्राभाकराः । निरुपाधिकत्वं चोपाधिशून्यत्वम् । उपाधिश्च साध्यव्यापकत्वे सति साधनाव्यापकत्वमिति नैयायिकाः । अस्यायं सग्रहश्लोकः प्राचीन उद्धृतो हर्षमिश्रेण—

"एकसाध्याविनाभावे मिथस्सम्बन्धशून्ययोः ।
साध्याभावाविनाभावी स उपाधिर्यदत्ययः ।।" इति ।

पद्यमिदं कुमारिलभट्टवार्तिकमिति शकरमिश्र. खण्डनखण्डखाद्यव्याख्याता कथयति । चित्सुखीव्याख्याता नयनप्रसादिन्या उदयनाचार्यपद्यमिति निर्दिशति । उभयत्रापीद पद्यं न दृश्यते । कदाचिद् भट्टपादबृहट्टीकागतं पद्यमिद स्यादित्यनुमीयते ।

श्लोकस्यायमर्थः—

यदत्ययः—यदभावः, साध्याभावाविनाभावी साध्याभावेन व्याप्तः, साध्याभावव्याप्त्यभावप्रतियोगी-साध्यव्यापक इति यावत् । मिथस्सम्बन्धशून्ययोः—अनेन साधनाव्यापकत्वमुक्तम् इति । ईदृशोपाधिविरहो भूयो दर्शनगम्य इति शालिकनाथः ।

२. "अतः प्राथमिकं प्रत्यक्षमेव धूमाग्न्यो. सम्बन्धनियमे प्रमाणम् । भूयोदर्शनेन पश्चात्तस्य निरुपाधिकत्वनिश्चयः" इति तन्त्ररहस्यम् ।

गृहीतग्राह्येव, अथाप्यनुभवात्प्रामाण्यमव्याहतम् ।[१] प्राभाकराणान्तु 'अनुभूतिः प्रमाणम्' इति प्रमाणलक्षणं पूर्वं न्यरूपयाम । संस्कारातिरिक्तकारणजन्यत्व-रूपमनुभूतित्वमनुमानस्थलेऽस्तीति न प्रामाण्यहानिः । अतएवासन्निकृष्टपद लक्षणे निवेशितम् । एवञ्च नियतसम्बन्धैकदेशदर्शनम्, सम्बन्धनियमस्मरणम्, अवाधितविषयत्वञ्चेत्यनुमानसामग्री प्राभाकराणामितिसिद्धम् ।

भाट्टा इवामी केवलव्यतिरेक्यनुमानं न स्वीकुर्वन्ति । अवयवा अपि पूर्वव-देव प्राभाकरैः स्वीक्रियन्ते । असिद्धत्वं साधारणत्वम्, असाधारणत्वम् बाधित-विषयत्वञ्चेति हेतोर्दूषणानि । प्रबलदुर्बलयोर्विरोधे दुर्बलस्य प्रबलापहृतविषय-त्वेन दुर्बलमात्मानमेव न लभते । तुल्यबलयोर्विरोध एव नोपपद्यते । उपपत्तौ वा वस्तुनो द्विरूपत्वापत्तिं बाधकस्तर्कः । तस्मात्सत्प्रतिपक्षस्य न दूषणान्तरत्वमिति प्राभाकरा अभिप्रयन्ति ।

## (क) "शाब्दप्रमाणे भट्टमतम्"

'शास्त्रं शब्दविज्ञानादसन्निकृष्टेऽर्थे विज्ञानम्' इति शाबर भाष्यम् । शास्त्रशब्देनात्र[२] पङ्कजादिपदवद्योगरूढ्या धर्माधर्मावबोधकानि चतुर्दशा-ष्टादश[३] वा धर्मस्थानापरपर्यायविद्यास्थानानि गृह्यन्ते । शब्दविज्ञानादित्यत्र शब्दशब्देन सामान्यवाचिना प्रकृतत्वाच्चोदनाऽभिधीयते । अर्थशब्देन च धर्माधर्मावभिधीयेते । तथाचायमर्थः– चोदनात्मके शब्दविज्ञानात्प्रमाणान्-तरागम्यधर्माधर्मविषयकज्ञानं येन भवति तच्छास्त्रमिति । लक्षणमिदं किं शब्दसामान्यस्य उत शब्दविशेषस्य ? यदि तावच्छब्दविशेषस्य तर्हि शब्दसामान्येऽतिव्यापकं स्यात् । यदि च शब्दसामान्यस्य तर्हि

---

१. "अहो अनुभवाविवेकिनो महान् प्रमाद किं पूर्वदृष्टस्यानुभवो न भवति ? अनुभूतिश्च नः प्रमाणम् । अन्या च स्मृतिरन्योऽनुभवः···सिद्धञ्चा-मानुमादिषु प्रमाणत्वमनुभूतेः" इति । —बृहती पृ—७९-८० (चौखम्बा सं०)

२. "प्रवृत्तिर्वा निवृत्तिर्वा नित्येन कृतकेन वा
पुंसां येनोपदिश्येत तच्छास्त्रमभिधीयते ॥"

३. "पुराणन्यायमीमांसा धर्मशास्त्राङ्गमिश्रिता. ।
वेदाः स्थानानि विद्यानां धर्मस्य च चतुर्दश ॥" या० स्मृ० श्लो०
इति विद्यास्थानानि चतुर्दश । चतुर उपवेदानादाय विद्यास्थानान्यष्टादश भवन्ति ।

'चोदनालक्षणोऽर्थो धर्मः' इत्युपक्रमभङ्गस्स्यात् । धर्मस्वरूपावबोधे चोदनैव प्रमाणमित्युपक्रान्तं जैमिनिना । अतश्चोदनात्मकशब्दस्यैव विशेषस्य लक्षणमुचितं भवेत् ।

अत्रेय विषयपरिशुद्धिः—'तस्य निमित्तपरीष्टिः' इति सूत्रयता जैमिनिना परीक्षाशास्त्रत्वमस्या मीमासाया अवबोधितम् । तन्निर्बोढुं प्रत्यक्षलक्षणवद्व्यभिचारशङ्कानिवृत्तये शब्दः परीक्षणीयः—किमिद धर्मस्वरूप शब्दद्वारा निर्णेतु शक्यते उत नेति । यथा विद्यमानोपलम्भकत्वात्प्रत्यक्षस्य धर्मस्वरूपनिर्णये न प्रसरः, तथा विज्ञाताच्छब्दात् पदार्थाभिधानद्वारेण यद्वाक्यार्थविज्ञान तच्छाब्द नाम प्रमाण, तस्य लोकसिद्धत्वान्न परीक्षायाः प्रसरः । अतः परीक्षाव्याजेनापि शब्दविशेषस्यैव शास्त्रस्य लक्षणंपरीक्षणञ्च समुचितम् । लौकिकशब्दलक्षण वेदप्रामाण्ये वा तदर्थविचारे वा न ह्य पयुज्यते । तस्माच्छब्दविशेषस्यैव[1] शास्त्रस्य लक्षणं भाष्यकारेण प्रादर्शि । प्रत्यक्षमात्रस्य शास्त्रस्वरूपावधारणद्वारा तदर्थविचारोऽस्त्युपयोगः । शास्त्रावगतौ हि तदर्थावधारण भवति ।

किञ्च भाष्यकारः आकृत्याधिकरणोपोद्घातरूपे लोकवेदाधिकरणे लौकिकवैदिकशब्दतदर्थानामानन्यत्व सिद्धान्तयति—य एव लौकिकाश्शब्दा. त एव वैदिकाः, य एव लोके शब्दानामर्थाः त एव वेदेऽपि शब्दानामर्था इति । न हि पृथग्वैदिकाना शब्दानां शक्तिग्रहो भवितुमर्हति । लोके गृहीतपदपदार्थसंगतिक- एव वेदेऽपि पदपदार्थानवबोद्धु शक्नोति । अतश्च विशेषलक्षणे कृते तस्य सामा-

---

१. "प्रत्यक्षादिषु वक्तव्यं शब्दमात्रस्य लक्षणम् ।
तदतित्वरितेनेदं किं शास्त्रमभिधीयते ।।"

इत्याक्षिप्य भाष्यं वार्त्तिककारस्समाधत्ते—

"अपरीक्षामिषेणापि लक्षणानि वदन्नयम् ।
न स्वतन्त्रोपयोगित्वनिरपेक्षाणि जल्पति ।।
तत्र यल्लोकवाक्यस्थं कथयेच्छब्दलक्षणम् ।
वेद व्याख्यातुकामस्य तन्नातीवोपयुज्यते ।।
यत्तु गामानयेत्यादि वाक्यस्थं शाब्दलक्षणम् ।
तस्य नेहोपयोगोस्ति तस्माच्छास्त्रगतं कृतम् ।।
विशेषश्च न सामान्यमन्तरेणास्ति कश्चन ।
तस्मात्तमप्युदाहृत्य सामान्यं लक्षयेत्सुखम् ।।" इति

—श्लोक-वार्त्तिकम् पृष्ठ—

न्येनाप्याक्रान्तत्वात् सामान्यलक्षणमप्यर्थात्सिध्यतीति । तथा च भाष्यसन्दर्भस्यायमर्थ.—प्रमाणान्तरानधिगते बाधितेऽर्थे ज्ञापक शब्दज्ञानजन्यमर्थज्ञान यत्तच्छाब्द प्रमाणम्, अभिहितान्वयवादे वाक्यार्थज्ञान प्रति पदोपस्थापितपदार्थज्ञानस्य हेतुत्वादिति ।

तदिद शाब्द प्रमाण लौकिक वैदिकञ्चेति द्विविधम् । लौकिक पौरुषेयम् वैदिकन्त्व पौरुषेयम् । उभयत्राप्यनाप्तप्रणीतत्वरूपाप्रामाण्यकारणासत्वे शब्दस्यादुष्टत्वाच्छाब्द स्वत. प्रमाणम् । तदिद शाब्द पुन द्विविधम्-सिद्धार्थ विधायकञ्चेति । विधायकमपि द्विविधम्-उपदेशकमतिदेशकमिति । इत्थमिद कर्त्तव्यमुपदेश., तद्वदिद कर्त्तव्यमित्यतिदेश । अनयोरेव प्रपञ्चो जैमिनिना द्वादशस्वध्यायेषु निरूपित । तत्र पूर्व षट्कमुपदेशस्य, उत्तरञ्च षट्कमतिदेशस्य विवरणपरम् । आहृत्य द्वादशस्वप्यध्यायेषु शाब्द प्रमाणमेव विशेषतो विचारित जैमिनिना । सर्वोऽप्यय प्रपञ्चः चोदनालक्षणस्य धर्मस्यैव परिकर । अतएवेद शास्त्रम् धर्मशास्त्रम्, वाक्यशास्त्रम्, विचारशास्त्रमित्यादिभिर्नामभि' प्रथते । एव कथने मन्ये नात्रात्युक्ति काचन भवेत्-यदुत शाब्दमेव प्रमाण प्राधान्येन निरूपयितु प्रवृत्तमिद "शास्त्रम्" इत्यन्वर्थसंज्ञाम् अलभत इति । अत एव 'जैमिनीय शासनम्' इति व्यवहरन्तो दार्शनिका नितरा गौरवावहा बुद्धिमस्मिन्नादधते ।

इमे हि भाट्टा अभिहितान्वयवादिन इत्यभिधीयन्ते । तत्तद्वाक्यगतानि पदानि स्व स्वमर्थमुपस्थाप्य विरतानि भवन्ति । एव पदैरभिहिताः पदार्था आकांक्षा-सन्निधियोग्यतारूपैः कारणै परस्परमन्वीयमाना वाक्यार्थमुपस्थापयन्तीति ये वदन्ति तेऽभिहितान्वयवादिनो भवन्ति । अभिहिताना पदार्थाना मिथोन्वय वदन्तीति व्युत्पत्ति । अभिधालक्षणागौणीति वृत्तयस्तिस्रो भाट्टानाम् । शक्त्यपरपर्याया अभिधा । 'सामर्थ्य सर्वभावाना शक्तिरित्यभिधीयते' इति वार्त्तिकात् शक्तिरिय शब्दगतत्वेनार्थगतत्वेन च द्विविधा । शब्दगता शक्ति. प्रायो मन्त्राणा विनियोजिका । अर्थगता[1] च शक्ति. 'स्रुवेणावद्यति' "स्वधितिनावद्यति" "हस्तेनावद्यति" इत्यादिषु स्रुवादीनामर्थाना पृथक्पृथग्विनियोजिका स्रुवास्याज्यादिवद्द्रव्यावदाने, स्वधिते. मासावदाने, हस्तस्य च पुरोडाशाद्यवदाने । "अभिधेयाविनाभूत[2] प्रवृत्तिर्लक्षणेष्यते" इति लक्षणलक्षिता लक्षणा । भाट्टैरिय वृत्ति. वाक्येऽप्यङ्गीक्रियते 'गामानय' इत्यत्र गोपदमाकृतिबोधक तत्सहचरिता व्यक्ति लक्षयति । 'व्रीहीन् प्रोक्षति' इत्यादौ व्रीह्यादिपद-

---

१. सामर्थ्याधिकरणम् (जै० सू० १-४-२५) ।
२. तन्त्रवार्त्तिकम् (जै० सू० १-४-१२) ।

मपूर्वसाधनत्वलक्षणम्-अपूर्वसाधनत्वावच्छिन्नान् प्रोक्षेत् इति लाक्षणिकशाब्दबोध । अत्र गोपदवत् व्रीहिपद न व्रीहिव्यक्ति लक्षयति, तथा सति नीवारादिपु वैकृतद्रव्येपु प्रोक्षणासिद्धे. । एव वैकल्पिकद्रव्येपु यवेषु, प्रतिनिधिद्रव्येषु व्रीहिसदृशेषु प्रोक्षणाभावप्रसगस्स्यात् यदि व्रीहिपदं व्यक्तिलक्षकं स्यात् । अतोऽपूर्वसाधनत्वे व्रीहिपदस्य लक्षणा समाश्रीयते ।[1] एव पदार्थद्वारा या वाक्यार्थस्योपस्थितिः सा लक्षणया । न हि वाक्यार्थस्य भान नैयायिकानामिव ससर्गमुद्रया भाट्टाना, किन्तु लक्षणयैव । अतो वाक्येऽपि लक्षणा स्वीक्रियते भाट्टैः । "लक्ष्यमाणगुणैर्योगाद्वृत्तेरिष्टा तु गौणता" इति वार्त्तिकात् 'अग्निर्माणवक' इत्यादौ वह्नित्वलक्षितादर्थात् यत्पैङ्गल्यादि गम्यते तत्साद्दश्यान्माणवके बुद्धिर्या जायते सा गौणवृत्या । तत्र निमित्तानि षट् तत्सिद्धिपेटिकाया[2] जैमिनिना निरूपितानि । तत्र तत्र वेदवाक्याना 'यजमानः प्रस्तर.' आग्नेयो वै ब्राह्मणः 'यजमानो यूप.' इत्यादीनामर्थनिर्णयाय गौणीवृत्तिः तत्प्रयोजकानि च निमित्तानि भाट्टै स्वीकृतानि ।

मम्मटभट्टप्रभृतय आलकारिकमूर्धन्याः तात्पर्याख्यां[3] वृत्तिमपि मीमासकसम्मता स्वग्रन्थेपु प्रदर्शयन्ति । सम्प्रत्युपलभ्यमानेपु मीमासाग्रन्थेषु क्वाप्यस्या वृत्तेश्चर्चा न विलोक्यते । किन्तुआकाक्षा योग्यता आसत्तिरिति त्रिभिः सहकारिकारणैस्सह तात्पर्यज्ञानमपि चतुर्थ कारणतत्वेन स्वीकुर्वन्ति भाट्टाः प्राभाकराश्च । तच्च तात्पर्यज्ञान लौकिकेपु पुरुषनिष्ठ वैदिकेषु च शब्दनिष्ठमिति विवेकः । इमानि च पदार्थाना परस्परमन्वयावसर उपयुक्तानि भवन्ति । अभिहितान्वयान्विताभिधानवादिभिरपि व्यञ्जनावृत्तिरेष्टव्येत्यभिधाय मम्मटाचार्यः[4] "यत्परः शब्दस्स शब्दार्थ." "सोऽयमिषोरिव दीर्घदीर्घतरोभिधा व्यापारः" इत्येव न्यायै अभिधावृत्यैवाभिधेय-लक्ष्य-व्यङ्ग्यानामर्थानां लाभ इत्येवं मीमासकसम्मतक्वचिदप्युपलभ्यमानग्रथेषु निरूपितं नोपलभ्यते । अवश्यमिमानि मतान्यासन्, तत्प्रकाशका ग्रन्था लुप्ता इति सभाव्यते ।

भावनामुख्यविशेष्यकशाब्दबोधवादिनो भाट्टा. । तत्राप्यार्थीभावनामुख्यविशेष्यकत्व शाब्दबोधस्य खण्डदेवेन भाट्टरहस्ये निरूपितम् ।

---

१. विषयोऽयं नवमाध्यायस्य प्रथमाधिकरणे निर्णीतो भाष्यकारैः ।

२. जैमिनि सूत्रम् १-४-२३ ।

३. काव्यप्रकाशः उल्लास—२ सू० ७ (तात्पर्यार्थोऽपि केषुचित्) । उ० २ सू० ३१ (अभिधातात्पर्यलक्षणाभ्यो व्यापारान्तरेण गम्याः ।

४. काव्यप्रकाशः उल्लास-५ ।

## (ख) "शाब्दप्रमाणे प्रभाकरं मतम्"

प्राभाकरास्तु मन्यन्ते-लौकिकानामाप्तवाक्यानामनुमानप्रमाणेऽन्तर्भावान्न तत्साधारण लक्षण भाष्यकारैरुक्तम्, किन्तु वैदिकानामेव वाक्याना प्रमाणान्तरापरिच्छिन्नकार्यार्थविबोधकत्वात्तदसाधारणमेव शास्त्रलक्षणमुक्तमिति[1]।

प्राभाकरा —शाब्दिकसम्मत स्फोटरूप शब्दतत्व पराकृत्य क्रमवन्तो वर्णाः पदमिति शब्दस्वरूपम्, अर्थविशेष, प्रत्याय्यप्रत्यायकभावरूप सम्बन्धमौत्पत्तिकं, शक्तिग्रहोपाय वृद्धव्यवहारम् असन्निकृष्टपदेन सपरिकरापूर्वस्थिति, शास्त्रमित्यस्यशास्त्रभेद-तदुपयोग्यनुबन्धभेदं शब्दान्तरादिभि. षड्भि प्रमाणैः साध्यभेद च शास्त्रपरिच्छेदेन निरूपयन्ति । तदयमत्र सक्षेप·—

"अथातो धर्मजिज्ञासा" इति सूत्रेण धर्मपदवाच्यो वेदार्थो विचार्यत्वेन सूत्रकृता प्रतिज्ञात । तस्य वेदार्थस्य चोदनासूत्रेण कार्यरूपत्व प्रतिपादितम् । चोदनासूत्रे भाष्यकार.—"चोदनेति क्रियाया प्रवर्त्तकवचनमाहुः" इति चोदनाशब्दविवरण करोति । वचनस्य प्रवर्तकत्व प्रवृत्तिहेतुभूतार्थाभिधेयत्वेनोपपादनीयम् । स्वभावतो वचनस्य प्रवर्तकत्वे वाक्यमात्रश्रवणेन प्रवृत्तिजयेत प्रवृत्तिहेतुभूतेऽर्थे[2] ग्रन्थकृता भूयान् मतभेद. । प्रभाकरस्तु वृद्धव्यवहारानुगुणकार्यमेव[3] प्रवृत्तिहेतुरिति स्वीकरोति । एवञ्चाय भाष्यार्थ·—प्रवृत्तहेतुभूतार्थाभिधायकत्वेन वाक्यं प्रवर्तकमिति, प्रवर्तकस्यैव वाक्यार्थत्वात् । तच्च कार्य वृद्धव्यवहारबलात्क्रियात्मक लोकतस्सिद्धम् ।

वेदेतु वृद्धव्यवहाराभावात् क्रियात्मक वा स्यान्नेति सन्देहे स्वर्गकामादिपदसमभिव्यवहारान्यथानुपपत्या क्रियातिरिक्तकार्यार्थत्व निश्चीयते । यव[4]वराहाधिकरणवाक्य[5] शेषाधिकरणन्यायाभ्या पदान्तरसमभिव्याहारबलात्पदार्थनिर्णय·-

१. बृहती पृष्ठ-८१-८२ (शब्दपरिछेदः)
ऋजुविमला पृष्ठ-,, ( ,, )

२. प्रवर्तनापरपर्याया शाब्दी भावनेति कुमारिलभट्टः (२-१-१) कर्तुस्समीहितसाधनत्वमिति मण्डनमिश्र । कृतिसाध्यत्वसमानाधिकरणसमीहितसाधनत्वमिति (विधिविवेक-श्लोक ३२) न्यायकणिकायाम्, समन्वयसूत्रभामत्या च वाचस्पतिमिश्रः, आप्ताभिप्रायो विध्यर्थ इत्युदयनाचार्यः ॥

३. बृहती पृष्ठ-१६-१८।

४. जै० सू९ १-३-४।

५. जै० सू० १-४-२२ ।

प्रसिद्धः । एवञ्च स्ववाक्यस्थमेव स्वर्गकामपदं क्रियातिरिक्त-कार्यरूपपदार्थान्तर-निर्णयहेतुरिति सिद्धम् ।

वेदे लिङ्गादे. कार्ये शक्तिः, लोके च क्रियाकार्ये लक्षणा, तज्ज्ञानस्य च प्रवृत्तिहेतुत्वम् । तच्च कृतिसाध्यत्वे सति कृतिनिरुपितोद्देश्यताशालित्वात्कार्यं-मित्युच्यते । प्रमाणान्तरागोचरत्वादपूर्वमित्यपि व्यवह्रियते । पुरुष तत्तत्कर्मणि नियोजयत् नियोग इति च गीयते । विषयोऽय प्राभाकरैः स्वर्गकामाधिकरणे[1] बादर्यधिकरणे[2] अपूर्वाधिकरणे[3] देवताधिकरणे[4] तन्त्राध्यायस्य प्रथ[5]माधि-करणे च निरूपित. ।

इमेऽन्विताभिधानवादिन इत्यभिधीयन्ते तत्तत्पदैः केवल पदार्थेष्वभिहितेषु तेषां परस्परान्वयरूपे वाक्यार्थे पुनर्लक्षणा भट्टमत इति तदनुसारिणोऽभिहिता-न्वयवादिन इति पूर्वमवोचाम । प्राभाकरा पुन· तादृशान्वयस्यापि तादृशपदार्थ-विशेषणतया शक्यत्व पदवाच्यत्व चाङ्गीकुर्वन्तोऽन्विताभिधानवादिनो भवन्ति । पदाना काममस्ति स्वभाविकी शक्तिरर्थबोधनानुकूला, किन्तु तत्रेतरान्वितपदार्थ-बोधनानुकूलत्वमपि स्वीकर्त्तव्यम्, तत्रैव शक्तिग्रहात् । तत्र पदार्थांशे ज्ञाता सती शक्तिः कारणम्, अन्वयाशे स्वरूपसती कारणम् । अतएवामी कुब्जशक्तिवादिन इति सगीर्यन्ते । एव वदताममीषामिदमन्तर्निहित तात्पर्य्यम्-वैदिकेषु पदेषु स्वभावसिद्धयाऽन्विताभिधानानुकूलया शक्त्या बोध जनयत्सु तस्मिश्च बोधे स्वतःसिद्धप्रामाण्यशालिनि, वेदवाक्याना स्वतःसिद्ध प्रामान्य स्थितमप्रकाश्य भवतीति ।

---

१. स्वर्गकामाधिकरणे (६-१-१) यो ममेदं कार्यमित्यवबुध्यते स नियोज्य इत्युच्यते । अतस्स्वर्गकामो नियोज्यतया सम्बध्यत इति व्यवस्थापितम् ।

२. बादर्यधिकरणे (३-१-३) नियोगस्य नियोज्यविशेषणीभूतकाम्योत्पादकत्व निर्णीतम् ।

३. अपूर्वाधिकरणे (२-१-२) कार्य हि क्रियारूप न भवति, तस्य क्षणि-कत्वेन फलसाधनत्वायोगात्मककर्मणस्तच्छक्तेर्वा स्थायित्व न सम्भवतीति नियोज्यान्वयमुखेन प्रमाणान्तरागोचरमात्मसमवायि कार्य लिङ्गादिभि-रभिधीयत इति विवृतम् ।

४. देवताधिकरणे (९-१-४) देवताराधनमुखेन कर्मणस्साधनत्वं न सम्भवति किन्तु कार्यस्यैवेत्युक्तम् ।

५. तन्त्राध्याये प्रथमपादे (११-१-४) 'कर्माण्यारम्भभाव्यत्वात्कृषिवत्प्रत्या-रम्भं फलानि स्युः ? इत्यत्र पुरुषसंस्कारमुखेन तन्न सम्भवतीत्युक्तम् ।

अत्र शब्द प्रमाणमात्रानुबन्धिनी काचन शङ्का समुदेति-यल्लोके शब्दस्य विसवाददर्शनात् वेदेऽपि किं न तथा भविष्यतीति। तत्र भाट्टा ऊचुः शब्दविसवादे लोके तादृशशब्दप्रयोक्तृ. भ्रमप्रमादादिदोषोपलम्भेन तच्छब्दजनितबोधस्य स्वतः प्राप्त प्रामाण्यमयोद्यत इति काम लोके पौरुषेयशब्दविशेषस्याप्रामाण्यम्। वेदे तु नित्यत्वान्न विसवादशकाप्युदेतुमलम्। शब्दविसवादे हि कारणभूतो दोषः प्रयोक्तृपुरुषसमाश्रय.। पुरुषएव चेत्तत्रासद्भूत कथमिव तद्गतभ्रमादिशंकाऽऽत्मान लभतामिति। प्राभाकरा पुन. वेदप्रमाण्यपरिपालने भूयासमिवादरमाबिभ्राणा. लौकिकशब्दाना प्रमाणत्वे हि तत्र क्वचित्प्रामाण्यव्यभिचारदर्शनाद्वेदशब्देऽपि तद्दृष्टान्तेन तच्छङ्कावतारप्रसक्तिः। अतो लौकिकशब्दा नैव प्रमाणमिति वदन्ति।

तदिद शाब्दम्-उपदेश[1]जम् कार्यजञ्चेति द्विविधम्। जैमिनेर्द्वादशलक्षण्या पूर्वषट्के उपदेश. उत्तरषट्के चातिदेश इति विभाग भाट्टा कुर्वन्तीति पूर्वमवोचाम प्राभाकरास्तु उपदेशस्य न केवलमतिदेशिकत्वम्, न वौपदेशिकत्वम्, किन्तु विध्याक्षेप्यत्वादुपदिष्टत्वम् तद्वद्भावेन प्रापितत्वाच्चातिदेशिकत्वमपि। अत उभयलक्षणाक्रान्तत्वादुभयरूपत्व तस्य, एकस्मिन्नपि प्रमेये प्रमाणद्वयसम्भवात्। तस्मादुपदेशप्रमेय पूर्वषट्के उत्तरस्मिश्च षट्के कार्यप्रमेयमिति मन्यमाना. शास्त्रस्यास्य शाब्दनिरुपणपरत्वमुपपादयन्ति। तदयमत्र द्वादशलक्षण्या विभागः- पूर्वषट्के प्रथमाध्यायेन प्रमाणविचारः, द्वितीयेन शास्त्रभेद-विचार, औपोद्घातिक, तृतीयेन वैनियोगिक' शेषत्वविचार., चतुर्थेन 'औपादानिका उत्पत्ति-विनियोग-प्रयोगाधिकारा विचारिता.' पञ्चमषष्ठाभ्या प्रयोगाधिकारौ विचारितौ। एवमुपदेशप्रमेयमुपकारापरपर्यायं कार्य विचारित पूर्वस्मिन् षट्के। उत्तरस्मिन् षट्के च कार्यप्रमेय विचारितम्। अत्र कार्यशब्देनोपकारः, कार्यप्रमेयशब्देन च पदार्था विवक्ष्यन्ते। तदिद शालिकनाथस्सगृह्य निरूपयति—

**"तत्प्राप्तिः कार्यतस्तेषां प्रकारश्चोपदेशतः।**
**प्रकृतावुपकारश्च पदार्थश्चोपदेशत. ॥"**
**"विकृतौ कार्यतो धर्मा. प्रकारचोपदेशतः।**
**उपदिष्टातिदिष्टत्वं त्वेकस्य च विरुध्यते ॥"**

इत्यादिना। उपदेशो नाम ग्रन्थसन्दर्भः। स चार्थान्तरान्वित विध्यर्थ कार्यत्वेन प्रतिपादयति। स तथा भूतएवौपदेशिका:, विध्यर्थे कार्यभूते तस्य प्रमाणत्वात्। अस्मादुपदेशाद्योऽर्थ प्रतीयते स एवौपदेशिक इति न नियम किन्तु विध्यर्थ.

---

१. प्रकरणपञ्चिका-अगपारायणम् पृष्ठ-२२६।

स्वप्रतीत्यर्थं य यमाक्षिपति स सर्वोऽप्यौपदेशिक एव । अयमौपदेशिकः पदार्थः विकृतावप्युपदेशेनैव प्राप्यते । पर प्राकृतस्योपकारस्य क्लृप्तत्वेन च प्राकृत एवोपकारः उपदेशेनाक्षिप्यते स्वसिध्यर्थम् । अतश्च प्रकृतौ विकृतौ चोपकार औपदेशिक एव । तदुपस्थापकन्तु प्रमाण न भाट्टानामिवैतेषामुपमानम्, किन्तु प्रत्यक्षवचन-नामलिङ्गान्येव प्रमाणानि । सर्वमिदमतिदेशपारायणे शालिकनाथेन सविशेष निरूपितम् ।

वृत्तयस्तु पूर्ववदेतेषां तिस्र एव । शक्तेरभिधापरपर्यायाः पदार्थान्तरत्वमिति विशेष पूर्वमवदाम ।

## "भाट्टसम्मतमुपमानं प्रमाणम्"

"उपमानमपि सादृश्यमसन्निकृष्टेऽर्थे बुद्धिमुत्पादयति, यथा गवयदर्शनं गोस्मरणस्य" इति शावर भाष्यम् । "सादृश्यम्" इत्युपमानपदविवरणम् । यत्सादृश्य दृश्यमानमसन्निकृष्टेऽर्थे प्रमाणान्तरागम्येऽर्थे बुद्धिमुत्पादयति तदुपमानम्-उपमित्यात्मकप्रमाकरणमितिलक्षणभाष्यार्थः ।

दर्शनान्तरे क्वाप्यनङ्गीकृतमुपमान प्रमाण स्वीकुर्वन्तो नैयायिकाः तस्य शब्दार्थव्युत्पत्तिफलकतामध्यवस्यन्ति । भाट्टास्तु तदिद प्रमाणमभ्युपयन्तोऽपि तत्र पराभिमतशब्दार्थव्युत्पत्तिमन्यथानिर्वहन्तोऽनुभूतपूर्ववस्तुसदृशस्य वस्त्वन्तरस्य प्रत्यक्षे सति यदनुभूतपूर्वस्य वस्तुनः प्रत्यक्षीक्रियमाणवस्तुसदृशतया ज्ञान जायते तदुपमानफल वर्णयन्ति । तथाहि—अरण्य गतस्य गवयाख्यमृगविशेष पश्यतः 'गोसदृशो गवय' इत्याकारक-सादृश्यविशिष्टगवयदर्शने जाते "एतत्सदृशी मदीया गौ" इत्याकारकसादृश्यविशिष्टगोज्ञानस्य गोविषये स्मरणरूपत्वे सादृश्यविषये प्रत्यक्षरूपत्वेऽपि सादृश्यविशिष्टस्य गवादेर्ज्ञानं भवति तदिदमुपमानफलम् । इदमुपमानप्रमाणस्य प्रमेयम् वह्निविशिष्टपर्वतस्यानुमानप्रमेयत्ववत् ।

एवन्तु साधयद्भिरमीभिभिसहितं फलान्तरमिदम्-यद् यत्रागानि न विशिष्यसमाम्नातानि तादृशेषु विकृतिकर्मसु अङ्गाना प्राप्तये विकृतिकर्मणा बोधकाले प्रकृतिकर्मणामुपदिष्टानामङ्गानां च नियमेनोपस्थितिः प्रतिपादयितव्या । यदि तत् समानधर्मदर्शनजनित स्मृतिमात्र भवेत् तर्हि यथाकथञ्चित्स्मृतस्य कर्मणोऽङ्गानि विकृतौ कर्त्तव्यानीतीत्यत्र परिनिश्चितप्रमाणाभावेनानाश्वासो भवेत् । अतो विकृतिपर्यालोचनसमये प्रकृत्यवगम परिनिश्चितप्रमाणविशेषाधीनोऽनुभव रूप इति स्थाप्यत इति ।

लक्षणभाष्यस्थ सादृश्य भाट्टमते वस्तुरूपम् । विवृतञ्च भट्टपादैः—

साहश्यस्यापि वस्तुत्वं न शक्यमवबाधितुम् ।
भूयोऽवयवसामान्ययोगो जात्यन्तरस्य तत् ।। इति
—(श्लो० वा० उपमान १८)

भूयोभिरवयवसामान्यैर्योजात्यन्तरस्य योगः, तत्साहश्यम् । जात्यन्तरावयवसामान्यग्रहणमुपलक्षकम्—व्यक्तिसाहश्यस्यापि यमादिषु दृष्टत्वात् । एवं गुणकर्मादिसामान्ययोगेनापि चित्रादिषु सादृश्यं दृश्यते अतस्सिद्ध जातिव्यक्त्यन्तरावच्छिन्नानि गुणावयवादिसामान्यानि वस्तुरूपाणि साहश्यमिति ।

## "प्राभाकरमतम्"

बृहत्यां प्रभाकरः—"साहश्यमिति[1] हि साहश्यम्" इति लिखति । साहश्यमिति यत्र ज्ञानं तत्साहश्यमित्यर्थः । अस्ति चेद ज्ञान, तन्निबन्धना च विषयाणां व्यवस्था । सर्वाण्यपि वस्तूनि संविदेकशरणानि । अयमेतत्सदृश इत्यस्तिसविदिति सर्वजनीनमिदम् । पदार्थविद उदयनाचार्या अपि 'बुद्धिमात्रममीषा लक्षणं प्रमाणम्, न तु द्रव्यादौ तत्कार्यमिवान्यदपि प्रमाणम्' इत्यभिवदन्त इमां प्रक्रियामनुसरन्ति । प्राभाकरास्तु अभ्युपगमसिद्धान्तन्यायेन प्राय. कणादतन्त्रसिद्धमेव प्रमेयजातमभ्युपच्छन्ति, तस्य तत्प्रतिपादनाय प्रवृत्तत्वात् । तत्र योऽनभिमतः पदार्थः त निराकुर्व्वन्ति । अतएव साहश्यमङ्गीकृत्य तस्य द्रव्याद्यन्तर्भाव प्रभाकरा न मन्यन्ते । साहश्यं न द्रव्यम्, गुणकर्मणोरप्याश्रितत्वात् । गन्धादयो गुणाः उत्क्षेपणादीनि च कर्माणि सदृशबोधगोचरीभवन्ति । अतएव साहश्य न गुणः, नापि कर्म । अनुगताकारप्रत्ययनिमित्तत्वाभावान्न साहश्यं सामान्यम् ।[2] समवायस्तु सम्बन्धविशेषः । अतो न तत्र साहश्यान्तर्भावः । विशेषस्तु प्रभाकरनये न पदार्थः, पृथक्त्वान्तर्गतत्वात्तस्य । अतः पदार्थान्तरत्वमेव साहश्यस्य । तथैव शक्तेः[3] संख्यायाश्च[4] ।

---

१. बृहती पृष्ठ-८२-८३ (चौ० सं०) ।

२. "अत्र सामान्यमेव कैश्चित्साहश्यमुक्तम्" इत्यादिनापरमतमनूद्य प्रभाकरेण वृहत्यां पक्षोऽयं खण्डितः । (बृहती पृष्ठ-१०९ मद्रास संस्करणम्) ।

३. कार्यानुकूलो धर्म एव शक्तिः, कार्यानुकूलधर्मविघटकत्व च प्रतिबन्धकत्वम् । सा शक्तिः सर्वभावेष्वतीन्द्रिया कार्येणानुमीयते । भाट्टैस्तु शक्तिरियमर्थापत्तिगम्येत्यभिधीयते । कारणीभूताभावप्रतियोगित्वं प्रतिबन्धत्वमिति वदतां नैयायिकाना प्रतिबन्धकताशरीरे कारणत्वनिवेशः कारणताशरीरे च प्रतिबन्धकत्वनिवेश इत्यन्योन्याश्रय इति मन्वाना प्राभाकराः कार्यानुकूलधर्मविघटकत्व प्रतिबन्धकत्वमिति प्रति-

उपमानस्यातिदेशोपपादकत्व भाट्टा इच्छन्ति, प्राभाकरास्तु नेच्छन्ति । विषयोऽयं पूर्वं निरुपित. ।

## "अर्थापत्तौ भाट्टमतम्"

"अर्थापत्तिरपि दृष्टः श्रुतो, वाऽर्थोऽन्यथानोपपद्यत इत्यर्थकल्पना" इति शाबरं भाष्यम् ।[१]

दृष्टोऽर्थः—प्रत्यक्षादिप्रमाणपञ्चकेन प्रमित इत्यर्थः । श्रुतोऽर्थ—शब्द-प्रमाणप्रमित इत्यर्थः । श्रुत इति पृथगुपादानाच्छ्रुतातिरिक्तप्रमाणप्रमितो दृष्ट-पदार्थः कल्पनीयः । अयमेव गोबलीवर्दन्याय इत्याचक्षते न्यायविदः । अतएव दृष्टार्थापत्त्या श्रुतार्थापत्तिर्भिन्नेति परिगण्यते । एव च प्रमाणषट्केन प्रमितस्या-ऽर्थान्तरेण विनाऽनुपत्तिमालोच्य तदुपपत्तये याऽर्थान्तरकल्पना साऽर्थापत्तिरिति लक्षणार्थस्सम्पन्नः ।

तथा च—अर्थस्यापत्तिः—कल्पना यस्मादिति व्युत्पत्या प्रमाणपरः, अर्थस्यापत्तिरिति षष्ठीसमासेन च फलपरोऽर्थापत्तिशब्दः । तत्र दृष्टार्थापत्तिः प्रमाणपञ्चकपूर्विका पञ्चविधा, श्रुतार्थापत्तिस्त्वेकविधा । दृष्टार्थापत्तावर्थस्य कल्पना श्रुतार्थापत्तौ तु शब्दरूपप्रमाण कल्प्यते । पञ्चविधाया दृष्टार्थापत्ते-रिमान्युदाहरणानि—

---

बन्धकशब्दार्थं निब्रुवते । यत्रैकस्य कार्यस्य बहूनि निरपेक्षाणि कारणानि यथा वह्निं प्रति तृणारणिमण्यादीनि तत्र व्यभिचारवारणाय नैयायिकै-रव्यवहितोत्तरत्वादिकं निवेश्य कार्यकारणभावोनिर्वोढव्यः । अतस्तन्मते शक्त्यनङ्गीकारे व्यभिचारः गौरवं चेतिमन्यमानाः शक्तिवादिनः प्राभाकराः वह्न्यनुकूलशक्तिमत्त्वेनानुगमय्य व्यभिचारं गौरवं च निवार-यन्ति । सा च शक्तिः—पदार्थशक्तिः सहजशक्तिरिति द्विविधा । तत्र शब्दस्यार्थाभिधानानुकूलाशक्तिः पदार्थशक्तिः पदार्थान्तरमिति प्राभाकरा आस्थिषत ।

१. एवं सख्यापि द्रव्यादिवत्पदार्थान्तरम् । सख्या न द्रव्यं भवितुमर्हति, गुणेषु सत्वात् । चतुर्विंशति. गुणाः गन्धो द्विविध इत्यादौ संख्याप्रयोगं च प्राभाकरा औपचारिक मन्यन्ते । न गुणाः, अनेकेषु वृत्तेर्घटत्वादिवत् । न कर्म, प्रत्यक्षत्वात्, प्रतीतिवैलक्षण्याच्च । न सामान्यम्, अनित्यत्वात् । न समवायः, सख्यायाः सबन्धरूपत्वाभावात् । तस्मात्पारिशेषन्यायेन सख्या पदार्थान्तरमिति प्रभाकरसम्मतिः ।

२. शबरभाष्य अ० १, अ० १, सू० ५ पृष्ठ-१२ ।

(१) तत्र दाहं प्रति वह्नेः कारणत्वं क्वचित्प्रत्यक्षतोऽनुभूयते,[1] क्वचिच्च सत्यपि वह्नौ नानुभूयते । अत प्रत्यक्षप्रमितस्य दाहस्यान्यथानुपपत्या वह्नेर्दाहकत्वशक्तिः कल्प्यते ।

नैयायिकास्तु— दाहत्वावच्छिन्नं प्रति मण्याद्यभावविशिष्टवह्नित्वेन कारणतास्वीकारे प्रतिबन्धकमणिसमवधानदशायां दाहापत्तिवारणे सम्भवे शक्तिर्नाङ्गीकर्तव्येति वदन्ति। तत्र दाहं प्रति क्वचिद् मण्यभावविशिष्टवह्नित्वेन क्वचिच्च वह्निविशिष्टमण्यभावत्वेन, क्वचिदोषध्यभावविशिष्टवह्नित्वेन, क्वचिच्च वह्निविशिष्टौषध्यभावत्वेन क्वचिन्मन्त्राभावविशिष्टवह्नित्वेन, क्वचिच्च वह्निविशिष्टमन्त्राभावत्वेनेत्येवमनन्ताः कार्यकारणभावा भवेयुरित्यतिरिक्तशक्तिकल्पनमेव ज्याय इति मीमांसकाः पश्यन्ति। तत्रातिरिक्तशक्तिस्वीकारेऽपि तस्या आनन्त्यं प्रागभावध्वंसाश्चानेके कल्पयितव्या एवेति मीमांसकानामपि गौरवमापतत्येव, तथापि फलमुखगौरवं न दोषायेति न्यायेन शक्तेरेव कारणत्वमर्थापत्त्या स्वीकुर्वन्ति ।

(२) एवं देशान्तरप्राप्तिलिङ्गकेनानुमानेन भास्करे गतिरनुमीयते। अनुमानतदन्यथानुपपत्त्या तत्र गमनशक्तिकल्पनाऽर्थापत्त्या भवति । इयमनुमानपूर्विकाऽर्थापत्तिः ।

(३) 'पीनो देवदत्तो दिवा न भुङ्क्ते' इति श्रुतेन वाक्येन दिवाऽभुञ्जाने देवदत्ते पीनत्वरूपो योऽर्थः प्रमितः तदन्यथानुपपत्तिमालोच्य तदुपपत्तये "रात्रौ भुङ्क्ते" इति रात्रिभोजनरूपार्थप्रतिपादकवाक्यान्तरस्य कल्पना । यद्यपि दिवावाक्यप्रमितस्यार्थस्योपपत्त्यर्थं रात्रिभोजनरूपार्थस्यैव कल्पनमुचितम्, तथापि "शाब्दः शाब्देनान्वेति" 'न हि शाब्दमशाब्देनान्वेति इति' वा न्यायेन श्रुतवाक्यप्रतीयमानार्थान्यथानुपपत्तिप्रतिसन्धानपुरस्सरं तदुपपत्तये आकाङ्क्षितस्यार्थान्तरस्य तद्बोधकेन वाक्येनैव समर्पणं युक्तम् । सेयं शब्दपूर्विका प्रमाणग्राहिण्यर्थापत्तिः ।

(४) गवयदर्शनादेतत्सदृशो गौरिति यद्गवि गवयसादृश्यमुपमितं तदन्यथानुपपत्त्या तादृशसादृश्यविशिष्टगवि तादृशप्रमाविषयत्वशक्तिरस्तीति कल्पना उपमानपूर्विकाऽर्थापत्तिरिति परिगण्यते ।

शब्दस्यार्थबोधान्यथानुपपत्त्या वाचकशक्तिं कल्पयित्वा पुनस्तदनुपपत्त्या शब्दस्य नित्यत्वकल्पना-अर्थापत्तिपूर्विकाऽर्थापत्तिः । सेयमर्थापत्तिः 'नित्यस्तु स्याद्दर्श-

१. "तत्र प्रत्यक्षतो ज्ञाताद् दाहाद् दहनशक्तता ।
वह्नेरनुमितात्सूर्ये यानात् तच्छक्तियोग्यता ॥"
—श्लोकवार्त्तिकम् औत्पत्तिकसूत्रे अर्थापत्तिपरिच्छेदः श्लोक-३

नस्य परार्थत्वात्'[1] इति सूत्रयता भवता जैमिनिना बोध्यते। तथाहि—दृश्यते शब्दोऽनेनेति व्युत्पत्त्या दर्शनशब्द उच्चारणार्थकः। यदि शब्दो नित्यो न भवेत् तदा परार्थं—परानर्थं प्रत्याययितुं दर्शनमुच्चारणं नोपपद्येतेति सूत्रार्थः। परार्थं यदुच्चारणं न तत्स्वतः फलरूपम्। तस्य चाऽन्येन केनचित्फलेन भवितव्यम्। तदालोचनायां फलवतो गवानयनादिव्यापारस्याङ्गभूतो यो गवानयनादिरूपार्थ-प्रत्ययः स तत्फलेनैव फलवान् इति शब्दस्योच्चारणसंस्कृतस्य फलमिति योग्यतयाऽवधार्यते। तादृशार्थप्रत्ययफलकत्वञ्च शब्दस्य नित्यत्व[2] एवोपपद्यत इति भावः।

(५) अनुपलब्धिपूर्विकाऽर्थापत्तिर्भाष्यकारेणैवोदाहृता "जीवति देवदत्ते गृहाभावदर्शनेन बहिर्भावस्यादृष्टस्य कल्पना" इति। जीवितो देवदत्तस्य गृहेऽभाव. योग्यानुपलब्ध्या प्रमित.। तदन्यथानुपपत्त्या च बहिर्भावस्य प्रमाणा-न्तरागम्यस्य या कल्पना साऽनुपलब्धिपूर्विकार्थापत्तिरित्यर्थो भाष्यसन्दर्भस्य। अत्रेयमाशंका वह्निमन्तरेणाऽनुपपन्नाद्धूमाद्वह्निर्यथाऽनुमीयते, तथा अनुपपन्ना-दुपपादककल्पनायामनुमानमेवायाति। कथमर्थापत्तिः प्रमाणान्तरमिति। अनु-मानेऽनुपपन्नं गमकं भवति, अर्थापत्तौ तु यदनुपपन्नं तदेव गम्य भवतीति प्रमाणान्तरत्वमर्थापत्तेः। अनुमाने निश्चित लिङ्गम् भवति। यस्य हि जीवनं गृहसम्बन्ध्येव प्रायशोऽवगतं, तस्य कदाचिद्गृहाभावे प्रत्यक्षीकृते जीवनं सांशयिकं भवद्बहिर्भावकल्पनया समाधीयते। यथा ह्यनुमाने निश्चित लिङ्गं तथाऽर्था-पत्तौ केनचित्प्रमाणेनावगत प्रमाणान्तरेणोत्थापितवितर्कं गमकं भवतीति दर्शनबलादभ्युपगम्यते। न चात्र प्रमाणयोरन्यतरत्रापि संशयः, किन्तु निश्चित-प्रमाणयोरेव द्वयोः समर्थनापेक्षामात्र कथमिदमुभयमुपपद्यतामिति सरम्भः। यथा—"नातिरात्रे षोडशिन गृह्णाति" 'अतिरात्रे षोडशिनं गृह्णाति इत्यत्र ग्रहणाग्रहणशास्त्रयोः। अत्रैकपरित्यागेन नेतरदुपपादयितुं शक्यते। अतो यथा तत्र कथमिदमुभयमुपपद्यतामित्यपेक्षिते प्रयोगभेदेनोभयमुपपद्यते, एवमिहापि प्रमाणप्रतिपन्नमुभय निश्चितसद्भावमर्थान्तिरपरिकल्पनया समर्थ्यते। तदिदमुक्तं वार्त्तिककारैः—

---

१. जै० सू० पृष्ठ-३३ सूत्र १८।

२. "उच्चरितमात्रे हि विनष्टे शब्दे न चाऽन्योऽन्यानर्थं प्रत्याययितुं शक्नुयात्। अतो न परार्थमुच्चार्येत। अथ न विनष्टः ततो बहुश-उपलब्धत्वादर्थाविगम इति युक्तम्" इति शाबर भाष्यमत्रोपष्टम्भकम्। पृष्ठ ३२।

"अन्यथानुपपत्तौ तु प्रमेयानुप्रवेशिता ।
तादूप्येणैव विज्ञानान्न दोषः प्रतिभाति नः ॥"
—श्लोक वा=५-२६

इत्यादिना ।

किञ्च, नैयायिकाः—लिङ्गम्-अन्वयव्यतिरेकिकेवलान्वयिकेवलव्यतिरेकि इति त्रिविधमङ्गीकृत्य केवलव्यतिरेकिणाऽर्थापत्तेश्चारितार्थ्यं वदन्ति । साध्याभावव्यापकीभूताभावप्रतियोगित्वमेव केवलव्यतिरेकत्वम् । अतएव विश्वनाथो भाषापरिच्छेदे—

"अर्थापत्तिस्तु नैवेह प्रमाणान्तरमिष्यते ।
व्यतिरेकव्याप्तिबुद्ध्या चरितार्था हि सा यतः ॥"

इति वदति ।

मीमांसकास्तु-केवलव्यतिरेकिणमनङ्गीकृत्य तत्स्थानेऽर्थापत्तिं स्वीकुर्वन्ति । अनुमाने उपपादकं गम्यम् अनुपपन्न गमकम्, अर्थापत्तौत्वनुपपन्न गम्यम् । उपपादकञ्च गमकम् इति भेदः । व्याप्तिपक्षधर्मताभ्यामनुमितिर्जायते, दिवाभोजनत्वाभावपीनत्वयो.स्सामानाधिकरण्यरूपानुपत्तिज्ञानादर्थापत्तिरिति सामग्रीवैलक्षण्येनाभयोर्भेदः । अनुमितौ अनुमिनोमीत्यनुव्यवसायः । अर्थापत्तौ तु कल्पयामि अर्थापयामिति वानुव्यवसायः । तेन च तयोर्भेदः ।

"अर्थापत्तौ प्रभाकरमतम्"

प्राभाकरास्तु-दृष्टार्थापत्तिमेवाङ्गीकुर्वन्ति । श्रुतार्थापत्ति नाङ्गीकुर्वन्ति । भाष्यगत श्रुतपदं गोवलीवर्दन्यायेनोपलब्धपरतया नयन्ति । किन्तु भाट्टमते गोवलीवदन्यायेन सकोचः, प्रभाकरमतेत्वसकोच. । स चोपलब्धोऽर्थः—अर्थान्तरकल्पनायामसत्यां योऽर्थान्तरमनुपपन्न कुरुते सार्थापत्तिः । अनुपपत्तिश्च[1] सन्देहरूप एव । प्रमीयतेऽनेनेति करणव्युत्पत्त्यङ्गीकारे अर्थसन्देहापादकोऽर्थः प्रमा, कल्पितोऽर्थ प्रमेयम् । प्रमिति. प्रमाणमिति भावव्युत्पत्त्यभ्युपगमे कल्पनाप्रमाणम् तदनन्तरभावि 'देवदत्तो बहिर्भाववान्' इति विशिष्टज्ञान फलमिति विवेकः ।

अर्थापत्तेरेनुमानानन्तर्भावश्च पूर्ववदेव । बहिर्भावसाधकानुमाने 'देवदत्तः बहिर्भाववान् गृहेऽसत्वात्' इत्यत्र गृहाधिकरणाभावप्रतियोगित्वं हेतु, तद्विशिष्टजीवनवत्त्व वा । तत्र प्रथमपक्षे मृतेऽपि हेतोस्सत्वेन व्यभिचारः, द्वितीयपक्षे

---

१. "तत्सन्देहव्युदासाय कल्पना या प्रवर्त्तते ।
सन्देहापादकादर्थादर्थापत्तिरसौ स्मृता ॥"
इति शालिकनाथ । पृ० २७५ (काशी हिन्दू विश्वविद्यालय सस्करणम्)

बहिर्भावस्थानुमित्सितत्वेन तस्य प्रागेव निर्णीतत्वेन किञ्चिदनुमेयमवशिष्यत इति सिद्धसाधनं दोष.। तदिदमुक्तम्—

**"तेन मेयानपेक्षस्य सन्दिग्धत्वादहेतुता।**
**हेतुत्वं यावति त्वस्ति ततो नान्यत्प्रमीयते ॥"**
**गेहाभावस्तु यश्शुद्धो विद्यमानत्ववर्जितः।**
**स भूतेष्वपि दृष्टत्वाद्बहिर्वृत्तेर्न साधकः ॥ इति**

—श्लोकवार्तिकम् ५.२१

अर्थापत्तिविषये भट्टप्रभाकरयोरय भेदः—"पीनो देवदत्तो दिवा न भुङ्क्ते" इत्यत्र 'रात्रौ भुङ्क्ते' इति शब्दः कल्पनीय इति भाट्टा आशेरते। प्रभाकरास्तु-रात्रिभोजनरूपोऽर्थ एव कल्पनीय इत्यङ्गीकुर्वन्ति।

तत्र भाट्टाः-अर्थकल्पनापक्षे—"वृत्या पदजन्यपदार्थोपस्थितेश्शाब्दबोधे करणत्वात् अपदार्थस्य च शब्दबोधे भानायोगात् श्रूयमाणवाक्यस्य तद्वाचकशक्त्यभावाच्चेति दोष पश्यन्ति। ततश्च यत्र श्रूयमाणस्य वाक्यस्य शब्दकल्पनयाऽनुपपत्तिश्शाम्यति तत्र शब्द एव कल्प्यते न त्वर्थ। यत्र तु शब्दकल्पनेऽपि-अर्थकल्पना यावदनुपपत्तिर्न शाम्यति तत्रार्थ एव कल्प्यते न शब्द इति लौकिकः पन्थाः। सर्वमिदमभिप्रेत्य भट्टपादैरुक्तम्—

**"पीनो दिवा न भुङ्क्ते चेत्येवमादिवचःश्रुतौ।**
**रात्रिभोजनविज्ञानं श्रुतार्थापत्तिरुच्यते ॥५॥**
× × × ×
**नचाप्यस्याः प्रमाणत्वे कश्चिद्विप्रतिपद्यते।**
**भेदाऽभेदे विसंवादः कृतस्तत्र विनिर्णयः ॥८५॥**

इत्यादिना।

(श्लोकवार्त्तिकम् पृष्ठ-४-६३-४७१)

प्राभाकरास्तु-श्रुतार्थापत्तिं नाङ्गीकुर्वन्तीत्यवोचाम। तेषामयमाशय—"पीनो देवदत्तो दिवा न भुङ्क्ते" इत्यत्र श्रुतौ दिवाभोजनाभावो रात्रिभोजनं विना पीनत्वस्याऽनुपपन्नत्वे सत्यनुपपद्यमानोऽपिरात्रिभोजनमेव कल्पयति, न शब्दम्। न हि शब्देन विनाऽर्थस्यानुपपत्ति, किन्त्वर्थेनैवेति तत्कल्पनैवोचिता। यद्युच्येत-अर्थकल्पनाय प्रवृत्ताऽर्थापत्तिः रात्रिभोजनरूपस्यार्थस्य सविकल्पक-ज्ञान-वेद्यत्वेन शब्दपूर्वकत्वप्रतीतेः शब्द एवादावुपतिष्ठते। अतश्शब्द एव कल्पनीय इति। अत्रैव प्राभाकरा वदन्ति-सर्वत्र सविकल्पकज्ञानेषु शब्दो विशेषणतया भासते। वाचकतया शब्दोऽर्थमवच्छिनत्ति। तेन गौरिति प्रतीतौ गोशब्द-वाच्योऽयमित्याकारकोऽर्थो गृह्यते। न ह्यत्र शब्दश्शब्दवाच्यतां निर्वहति

तेनाऽर्थस्याऽप्रतिपादकोऽस्मिन् विषये शब्द. । किन्तु वृद्धव्यवहारावगतया वाचकतया वाच्य विशिनष्टि। तेन शब्दोऽर्थस्यानुपस्थापकत्वात्प्रथममावपि नानुपपत्तिं शमयितु क्षम इति नार्थापत्तिप्रमेयता गन्तुमर्हति । तेनार्थविषयैवेयमिति ।

अत्र भाट्ट मतमेव युक्तमुत्पश्यामः । अर्थापत्ते· प्रमाणस्य लोकापेक्षया वेदे भूयानुपयोग । वेदवाक्यानां याथातथ्येनार्थनिर्णेतु प्रमाणस्यास्य भूयसी आवश्यकता । तथाहि-वेदे श्रुतार्थापत्तिप्रमाणको भागो वर्तते यश्च तामन्तरेण न सिध्यति । यथैव पाठेनाभिव्यक्ता श्रुतिरात्मान लभते तथा श्रुतार्थापत्तिप्रमाणका । अष्टकादिविषया मन्वादिस्मृतिमुपलभ्य तन्मूलकारणान्विच्छाया सत्या भ्रमविप्रलिप्सा-नुभव-पुवाक्येष्वसम्भवत्सु स्मृतेर्मूलकारणमन्तरेणानुपपत्त्या श्रुतिरेव शब्दरूपा मूलतया कल्प्यते, न ·वर्थं· । एव विनियोगविधिसहायकेषु लिङ्गवाक्य-प्रकरण-स्थान-समाख्यारूपेषु प्रमाणेषु भूयानुपयोग. अर्थापत्ते· । दर्शपूर्णमासादिप्रकरणाम्नातेषु मन्त्रेषु स्वाध्यायाध्यनविधिपरिगृहीतेषु प्रयोजनमन्तरेणानुपपद्यमानेषु क्रत्वपेक्षया च सामान्यत क्रतूपकारावगतौ सत्या विशेषापेक्षाया मन्त्रगतसामर्थ्यवशेन यच्छक्नुयात्तत्कर्त्तव्यमेभिरितिशक्यार्थविषया मन्त्रस्य विनियोजिका श्रुति. कल्प्यते । यथा 'वर्हिर्देवसदन दामि' इति मन्त्रे-अनेन मन्त्रेण वर्हिर्लवन कुर्यादिति' । अस्मिन्नेव मन्त्रे 'दामि' इति पद लवने शक्तमिति तदेव लिङ्गे विनियुज्यते, पदान्तराणि तु तत्समभिव्यहारात्मना वाक्येनैव विनियुज्यते । प्रकरणविनियोगस्तु-दर्शपूर्णमासप्रकरणपठितानां प्रयाजादीना भवति । प्रयाजादिषु प्रयोजनाकाङ्क्षा, क्रत्वोश्चोपकाराकाङ्क्षा । एवमुभयाकाङ्क्षाणां नष्टाश्वदग्धरथन्यायेन मिथस्सम्बन्धेऽवगते प्रयाजादिभि क्रतुमुपकुर्यात्-'इति श्रुतिः कल्प्यते । एव स्थानविनियोगे 'अनेन मन्त्रेण उपाशुयाजमुपकुर्यात्'-समाख्याविनियोगे च'-इमाम् पदार्थानध्वर्यु· कुर्यात्'' इति च श्रुतिरेव कल्प्यते । एव यान्यश्रूयमाणफलकानि कर्माणि यथा बिश्वजिदादीनि, यानि चाश्रुतेतिकर्त्तव्यताकानि यथा सौर्यादीनि कर्माणि, तेष्वाकाङ्क्षापूरणाय 'विश्वजिता यजेत स्वर्गकामः' सौर्यं चरु निर्वपेद्ब्रह्मवर्चसकामः आग्नेयवदुपकृत्य' इति श्रुतिरेव कल्प्यते । एवंजातीयक. श्रुतार्थापत्तेरुपयोगो वेदे दृश्यते । न चायमुपयोगोऽनुमानेन प्रसिध्यति, न ह्यत्रानुपपद्यमानस्य कल्पनीयेन सम्बन्धः केनचिद्दृष्ट. । न चानपेक्षितसम्बन्धमनुमानं क्वचिद्भवति । अतोऽर्थापत्तिरेवात्र शरणमिति ।

## अनुपलब्धिप्रमाणम्

'अभावोऽपि-प्रमाणाभावो नास्तीत्यर्थस्यासन्निकृष्टस्य' इति शाबरं भाष्यम् । अभाव इत्यस्य विवरणम् प्रमाणाभाव इति । प्रमाणशब्दोऽत्र प्रागुक्तप्रत्यक्षादि-

१. शाबरभाष्यम् पृष्ठ—१.१.५.

रूपप्रमापञ्चकपरः । तद्भावोऽनुपलब्ध्याख्य नास्तीत्यस्यासन्निकृष्टस्यार्थस्य ग्राहकं प्रमाणमिति भाष्यस्यार्थः ।

भूतले घटो नास्तीत्येवं प्रतीयमानो यो भूप्रदेशातिरिक्तः स्मर्यमाणघटावच्छिन्नो भूप्रदेशाधिकरणको नञर्थरूपोऽभावस्तादृशस्य प्रमेयस्य प्रमापक प्रमाणमनुपलब्धिरिति भाव. । असनिकृष्टस्येत्यनेन प्रत्यक्षाद्यविषयत्वमस्य प्रमेयस्य सिध्यति । तथा च भूतले घटो नास्ति इत्येव भूतलाधिकरणकतया भूतलव्यतिरेकेण प्रतीयमानस्य घटाभावस्य प्रत्यक्षाद्यविषयस्य बोधकः प्रत्यक्षादिप्रमापञ्चकस्योत्पत्तियोग्यस्यापि योऽनुत्पादोऽदृश्यादर्शनयोग्यानुपलम्भादिपर्यायः प्रमाणाभावशब्दित. स एवानुपलब्ध्याख्य प्रमाणमितिसिद्धम् ।

अस्ति तावन्नास्तीति बुद्धिः सर्वलौकिकपरीक्षकाणामविवादसिद्धा। बुद्धिश्च न निरालम्बना स्वाशालम्बना वोत्पत्तुमर्हतीति पूर्वमुक्तम् । अतोऽस्या एव बुद्धे. प्रतिबिम्बप्रमेयमुपकल्प्यते ? सोऽयमभावस्य विपय. । अतएव प्रागभावादिभेदेन चतुर्धाऽभावस्य विभागो भवति नह्यवस्तुनो विभागस्सम्भवति । यदि तु नाभावस्तत्वान्तरमिष्यते, कर्स्तर्हि क्षीरे दध्यभावः? य हि लोकाः प्रागभाव इत्याचक्षते । एव दध्नि क्षीराभाव प्रध्वसाभावं व्यवहरन्ति । न हि प्रमेयमन्तरा लौकिकानां व्यवहारो भवितुमर्हति ।

किञ्च, "इह भूतले घटोनास्ति इति बुद्धेः कि भूतलमेवालम्बनं भवति ? एव सति घटवत्यपि भूतले भूतलस्य सत्वात्तादृशी बुद्धिस्स्यात् । केवल भूतलमालम्बन तस्या बुद्धिरिति कथन न युक्तियुक्तम् । केवल शब्दार्थो यदि भूतलमेवेत्युच्यते तर्हि स एव प्रसगः । यदि च तत्वान्तरमित्युच्यते तर्ह्यायात प्रमेयान्तरम् । तेन चानुपलब्धेः प्रमाणान्तरत्व प्रसिध्यति । न हीद प्रमेयान्तर प्रत्यक्षेण शक्यतेऽनुभवितुम्, तस्येन्द्रियाधीनत्वात् । भावरुपाणामिन्द्रियाणा भावेनैव सन्निकर्षस्समुचितः नाभावेन । क्वचिदसत्यपि सन्निकर्षे "नास्ती" ति बुद्धिरुत्पद्यमानाऽनुभूयते । यथा—स्वरूपमात्रदृष्टे गृहादौ देशान्तरगमने कस्यचिदभाव प्रत्यनुयुक्तेन तदैव तदभावोऽवसीयते । तदेवमसत्यपीन्द्रियसन्निकर्षे जायमान नास्तीति बुद्धिर्नैन्द्रियिकी । न ह्यस्या बुद्धेरुत्पादक किञ्चिल्लिङ्गमस्ति यच्च लिङ्गिनमनुमापयेत् । अनुपलब्धिर्लिङ्गमिति वक्तव्यम्, तच्चाविज्ञानपूर्वम् । न ह्यविज्ञात लिङ्ग क्वापि लिङ्गिनमनुमापयितु क्षम भवति । ज्ञातासती अनुपलब्धिर्लिङ्गं भवतु—इति तु न युक्तम्, अनुपलब्धेरप्यभावरूपत्वेनापरसजातीयापेक्षयामनवस्थापत्तेः । अत. प्रमाणान्तरमेवेद भावनामसकरसिध्यर्थमास्थेयम् ।

किञ्च, कीटकण्टकादिरहिते तत्सहिते च भूतलादौ निश्शङ्कसशङ्कचरणन्या-

सादिव्यवहारेण प्रवृत्ति. तत्प्रदेशान्निवृतिश्चानुभूयते । सच प्रवृत्तिनिवृत्ति-लक्षणो व्यवहार. किं भूतलमात्रपरिच्छेदनिबन्धनो भवति ? केवलभूतलपरिच्छेद-निबन्धन: ? एव कैवल्यं परिच्छेदस्ब विशेपणम्, उत भूतलस्य ? तत्र नाद्यः पक्षस्समुचित. कण्ठकादिमत्यपि पादन्यासादिव्यवहारप्रसगात् । न द्वितीयः, केवलपरिच्छेदश्च यथाकथञ्चित्परिच्छेद एव । तथा सति सूक्ष्मकण्टकादिष्व-विज्ञातेष्वपि निश्शङ्कप्रवृत्तिनिवृत्तिलक्षणो व्यवहारः प्रसज्येत, प्रयत्नपुरस्सरा विशेषजिज्ञासाऽपलपिता च स्यात् ।

किञ्च, गवि नायमश्व इति रूपे नाय रस इति च प्रत्ययौ किमवगाहेते ? न तावद्रूपम्, तस्याश्वप्रतियोगिनैरपेक्ष्येणापि प्रतीयमानत्वात् । अश्वो न भव-तीति ज्ञानस्य तु प्रतियोग्यपेक्षत्वम् । अथ गोरूपमितिचेत्सिहादौ नायमश्व इति प्रतीतिर्नोत्पद्येत, गोरूपस्य तत्राभावात् । नन्वश्वप्रतियोगिको गवानुयोगिकश्च भेदस्तादृशप्रतीत्यालम्बन इति चेत्तर्हि कोऽयं भेदो नाम ? किमितरेतराभावः ? समायात तर्ह्यभावेन ।

किञ्चाभावानङ्गीकारे 'नास्ति' शब्दोऽनर्थकस्स्यात् । शशादीनां शृङ्गानु-मानङ्कूर्मशरीरे रोमानुमानञ्च प्रसज्येत । 'इद रजतम्' इत्यस्य नेद रजतम् इत्यनेन बाधो न स्यात् । अतश्चाभावाख्य तत्वान्तरमास्थेयम् ।

किञ्च, अभावस्स्वानुरूपेण प्रमाणेन गृह्यते प्रमेयत्वात् भाववदित्यनुमाने-नापि प्रमाणान्तरत्वमनुपलब्धेस्सिध्यति । अमुमर्थं व्याप्तिमुखेन वार्त्तिककारो विशदयति—

**"भावात्मके यथा मेये नाभावस्य प्रमाणता ।**
**तथाऽभावप्रमेयेऽपि न भावस्य प्रमाणता ।।**

इत्यादिना ।

(श्लोक वा० अभावरिच्छेदः ४६)

भावाभावाभेदेन भिद्यमाने पदार्थसामान्ये यो भावो येनेन्द्रियेण गृह्यते तद-भावोऽपि तेनैवेन्द्रियेण गृह्यत इति प्रमाणचतुष्टयवादिनो नैयायिकाः तत्तन्द्रि-यैस्तत्तदभावे गृह्यमाणे तत्तत्प्रतियोग्युपलम्भाभावस्य सहकारिकारणतामङ्गी-कुर्वन्ति । तत्रप्रतियोग्युपलम्भाभावग्रहणाय लौकिकसन्निकर्षेषु विशेषणताख्य संनिकर्षान्तरमङ्गीकृत्याभावस्य प्रत्यक्षत्वमेव व्यवस्थापयन्ति । तत्रैकेन सन्नि-कर्षेण कार्यं न हि सिध्यतीति अनेके सनिकर्षाः विशेषणता, सयुक्तविशेषणता, संयुक्तसमवेतविशेषणता इत्यादयस्स्वीकर्त्तव्या भवेयुः । तदपेक्षया लाघवादेक-मतिरिक्तं प्रमाणमेवास्त्विति मीमासकाः पश्यन्ति । किञ्च, 'न कलञ्जं भक्ष-तेत् नानृतं वदेत्' 'नानुयाजेषु ये यजामह कुर्यात्' 'नेक्षेतोद्यन्तमादित्यम्'

इत्यादिभिः लौकिकैः वैदिकैश्च वाक्यैः निषेधरूपेण पर्युदासरूपेण च बोधितो नञर्थोऽभावः शब्दप्रमाणेन गृह्यत इत्यत्र नास्ति कश्चन विवादः । एवं भूतलाधिकरणकघटाभावः प्रत्यक्षेण गृह्यत इत्यङ्गीकृत्यापि भावान्तरप्रत्यक्षापेक्षयाऽत्र वैलक्षण्यं नैयायिकैस्साधनीयमेव । तच्च वैलक्षण्यं सन्निकर्षान्तरमादाय सम्पादयन्ति तैः, मीमांसकास्तु प्रमाणान्तरमङ्गीकृत्योपपादयन्तीति भेदः ।

## अनुपलब्धौ प्राभाकरमतम्

प्राभाकरा —"अभावोऽपि प्रमाणाभाव" इति भाष्यं प्रमाणलक्षणपरं नाङ्गीकुर्वन्ति, तेषां मते भावरूपप्रमेयस्यैवाभावात् । केचित्किलाभावं नाम षष्ठं प्रमाणमातिष्ठन्ते, तन्निराकरणपरोऽयं भाष्यसन्दर्भः ।

यदेके वदन्ति नास्तीत्यस्यार्थस्यासन्निकृष्टस्य प्रत्यक्षविषयस्य अभावः प्रमाणमिति, तत्र, प्रमाणाभावो ह्यसौ-प्रमाणं न भवतीत्यर्थकभाष्यं नयन्ति । तेषामयमाशय —"इह भूतले घटो नास्ति" इत्यत्राभावप्रतीतावधिकरणप्रतीतिरपेक्षितेति समेषां तीर्थकराणां सम्मतमिदम् । तत्र कीदृशस्याधिकरणस्य प्रतीतिरभावप्रतीतेः कारणमिति विवेके-त्रयः पक्षाः अत्र वक्तुं शक्यन्ते सद्वितीयस्याधिकरणस्य प्रतीतिः, अभावविशिष्टस्याधिकरणस्य प्रतीतिः, भावाभावानपेक्षिण एकाकिनोऽधिकरणस्य प्रतीतिरिति । तत्र न प्रथमः पक्ष उचितः-घटवति भूतले प्रतीते तदभावप्रतीतेर्वारयितुमशक्यत्वात् । न द्वितीय-अभावं प्रतीत्य तद्विशिष्टमधिकरणं प्रत्येतव्यम्, पश्चात्स एवाभावः प्रतिपत्तव्य इत्यभावागतिरेवाभावागमकारणमिति स्वग्रहसापेक्षग्रहविषयत्वेनात्माश्रयापत्तेः । अतोऽगृहीतेऽप्यभावे स्वरूपमात्रविषया प्रतीतिरवश्यमङ्गीकर्त्तव्या । अयं तृतीयः पक्षः । तावतैवाभावव्यवहारोपपत्तावतिरिक्तस्याभावनामकस्य तत्वान्तरस्य काऽऽवश्यकता ?

ननु अभावानङ्गीकारे यत्र लगुडपातादिना कपालमालोत्पत्तौ तदेकविषया बुद्धिस्तत्र पश्चात्संसृष्टविषया न स्यादित्याशङ्क्यते, तर्हि अभाववादिनोऽपि मते संसृष्टबुद्धिः किमिति न भवतीति पर्यनुयुक्तो भावविनाशादिति ब्रूयात्, तथैवाज्ञावस्याधिकरणस्वरूपवादिना प्राभाकराणामपि तथैव स्यात् । प्राभाकरा अपि विनाशमङ्गीकुर्वन्ति । स च भावान्तरोदय एव । यतो हि भाव एवैकाकी सद्वितीयश्चेति द्वयीमवस्थामाप्नोति । तत्रैकाकी एव विनाशशब्देनाभिधीयते । अभाववादिनोऽपि मते तादृश्यवस्थाऽङ्गीकर्त्तव्या भवति तदुक्तं वार्त्तिककारैः—

> **स्वरूपमात्रं दृष्ट्वापि पश्चात्किञ्चित्स्मरन्नपि ।**
> **तत्राऽन्यनास्तितां पृष्टस्तदैव प्रतिपद्यते ॥" इति**
>
> (श्लोक वा० अभाव परिच्छेदः २८)

अतोऽधिकरणस्वरूपातिरिक्तोऽभावो नाङ्गीकर्त्तव्यः।

अयमत्र तेषा भाव-भावानामवगतिर्द्विविधा-एका भावान्तरसंसृष्टविषया अपरा च तदेकविषया। द्वितीयापि द्विविधा-प्रतियोगिनि दृश्येऽदृश्ये च। तत्र दृश्ये प्रतियोगिनि या तदेकविषया बुद्धि., सैव प्रतियोगिनोऽभावः। तथा च यस्मिन् दृश्ये प्रतियोगिनि या तदेकविषया बुद्धिः सा तदभाव इति विशेषतो व्यपदिश्यते-भूतलेघटाभाव इति। अतो भूतले घटो नास्तीत्युक्तेघटेऽदृश्ये भूतलमात्रस्य बोध इत्युक्त भवति। प्रतियोगिनि दृश्यत्वञ्च-अन्यत्र प्रमितस्यान्यत्र प्रसक्तिः। इदञ्चातिरिक्तवादिभिरप्यङ्गीकर्त्तव्यमेव। अन्यथा-अप्रसक्तनिषेधस्स-मापद्यते, "प्रसक्त हि निषिध्यत" इति न्यायात्। सा च गुरुमते ज्ञानविशेष इति वर धर्मिकल्पनातो धर्मकल्पना, लाघवादिति।

किञ्च, प्रमाणान्तरवादिनो मतेऽनुपलब्धिलक्षणा प्रमाणानुत्पत्तिस्सत्तयाऽ-वबोधिका ज्ञातत्वेन वा। न प्रथमः-स्वापादौ सर्वाभावप्रतीतिप्रसगात्। अतो विदितैवाऽनुपलब्धिरभावप्रतीतिकारणमिति द्वितीय. पक्ष. स्वीकर्त्तव्यो भवति। तथा सति अनुपलब्धेरप्यभावरुपतया तद्भानमप्यनुपलब्धिप्रमाणगम्यमित्यन-वस्था स्यात्। गुरुमते तु तदेकविषया बुद्धिः स्वयम्प्रकाशतया न प्रमाणान्तरम-पेक्षते। अतोऽनुपलब्धेः न प्रमाणान्तरत्वम्, नापि तन्महिम्ना भावस्य प्रमेयत्व-सिद्धिः।[1]

१. सर्वमिदमनद्य काशिकाकारेण श्री सुचरितमिश्रेण सयुक्ति खण्डितम्।

## पञ्चमः परिच्छेदः

# ख्यातिनिरूपणम्

एव तावद्भट्टप्रभाकरमतभेदेन प्रमाणानि प्रदर्शितानि । एभिः प्रमाणैर्जायमान ज्ञान प्रमात्मक भ्रमात्मकञ्चेति द्विविधम् । भ्रम एव ख्यातिरिति शब्दान्तरेणाभिधीयते । यथा धर्मस्योपादानाय, अधर्मस्य च हानाय जिज्ञासा भवति तथैव प्रमाया· भ्रमस्य च स्वरूप ज्ञातव्यं भवति । तत्र भ्रमज्ञानविषये दार्शनिकाना भूयान् मतभेद. । 'इद रजतम्' 'अय सर्व.' इत्यादि ज्ञानेषु शुक्त्यादाविदमाद्यधिष्ठाने भासमानस्यारोप्यस्य रजतादे. स्वरूपमधिकृत्ययो वादो वादिना प्रवृत्त स ख्यातिवाद इत्युच्यते ।

इमे वादिनश्चतुर्धा विभजितुं शक्यन्ते—असत्ख्यातिवादिन., सत्-ख्यातिवादिन. सद सत्ख्यातिवादिन , सदसद्विलक्षणख्यातिवादिनश्चेति । तत्र आरोप्य रजतादिकम् असत् सत् सदसत्, सदसद्विलक्षणमिति च स्वीकृतं भवति । अत्र सत्पदेन पारमार्थिकमुच्यते । असत्पदेन च निरुपाख्यं तुच्छ अलीकमित्यादि पदैर्व्यवह्रियमाण शशशृङ्गबन्ध्यापुत्रसदृश वस्तूच्यते । एतद्विषयणीमेव वस्तुशून्या वृत्ति भगवान् पतञ्जलिः योगसूत्रे "शब्दज्ञानानुपाती वस्तुशून्यो विकल्पः, (समाधिपादः सूत्र .) इति विकल्पपदेन व्यपदिशति । सदसदिति पदेन तदुभयात्मकमुच्यते । सदसद्विलक्षणमिति पदेन तदुभयविलक्षण कथ्यते । सदसद्वलक्षणमेवाद्वैतवादिन माया मिथ्या मृषा अनृतम् ज्ञाननिवर्त्यमित्यादि पदैरामनन्ति । तत्र—'असत्, मिथ्या, इति पदद्वय भिन्नार्थकम् तुच्छपदपर्यायोऽसच्छब्द., तद्विलक्षण. मिथ्येति शब्द. असद्विलक्षणत्वांशं विहाय सद्विलक्षणत्वमात्र तुच्छे मिथ्यापदार्थे च साधारणमिति कृत्वा सद्विलक्षणत्वमात्रतात्पर्येण मिथ्यापदार्थस्यापि तुच्छस्येव क्वचिद्व्यवहारो दृश्यते ग्रन्थेषु ।

अतएव मिथ्यापदार्थव्यावर्तनेन तुच्छ बोधयितुम् अत्यन्तासदिति पद प्रयुञ्ज ग्रन्थकाराः । यथा अतीन्द्रियपदं प्रत्यक्षाविषयस्यगुरुत्वादेर्बोधकमपि कदाचिदिन्द्रियमतिक्रान्ते कुड्यादिव्यवहिते घटादावपि प्रयुज्यते, तद्व्यावर्तनाय

नित्यातीन्द्रियमिति गुरुत्वादिक व्यवहरन्ति तथैवात्यन्तासदिति पद तुच्छे व्यवहरन्ति ।

तत्रासत्ख्यातिवादिनो माध्यमिका माध्वाश्च भवन्ति । बुद्धस्य भगवतश्शिष्येषु सौत्रान्तिक-वैभाषिक-योगाचार-माध्यमिकेषु माध्यमिका. शून्यवादिनः योगाचाराः विज्ञानमात्रास्तित्ववादिनः, इतरे द्वयेऽपि बाह्यपदार्थस्याप्यस्तित्ववादिनो भवन्ति । तत्र सौत्रान्तिकाः प्रतिबिम्बेन बिम्बस्येव विज्ञानगताकारेण आकारार्यकबाह्यपदार्थस्यानुमेयत्व मन्यते । वैभाषिकास्तु बाह्यपदार्थस्य प्रत्यक्षत्वमाचक्षते ।

माध्यमिकानां मते-असदेव रजत भ्रमे भाति । अधिष्ठानमप्यसदेव । असति इदमादौ असत्-रजतादिक भातीति सदाधिष्ठानकासत्ख्यातिवादिनः ।

माध्वाना मते त्वधिष्ठानस्येदमादेः सत्वम्, आरोप्यस्य रजतादेश्चासत्वमित्यभ्युपगमात् ते सदधिष्ठानकासत्ख्यातिवादिन । एवं प्रथमोऽसत्ख्यातिवादः-असदधिष्ठानकासत्ख्यातिवादः सदधिष्ठानकासत्ख्यातिवाद इति द्विविधस्संवृत्तः ।

द्वितीयः सत्ख्यातिवादः । स च षोढा भिद्यते । आरोप्य रजतादिकम् अन्तः बुद्धौ सदिति केचिदाहु. । बहिस्सदिति परे । तत्रापि व्यवहिते देशान्तरे आपणादौ सदिति केचित् । पुरोदेशे सदित्यपरे । बुद्धौ सदिति माध्यमिकव्यतिरिक्तास्त्रयोऽपि बौद्धा आचक्षते । इमे त्रयोप्यात्मख्यातिवादिनोभवन्ति । बुद्धिरेवाऽऽत्मा तेषा । ज्ञान बुद्धिरात्मा इति त्रयमेकमेव । रजतादिकं ज्ञानाकारतया ज्ञानधर्मः । धर्मधर्मिणोश्चाऽभेदात् रजतमात्मैव । अतएवाऽऽत्मख्यातिवादस्तेषाम् ।

तत्र योगाचाराणा विज्ञानवादिन इति प्रसिद्धाना मते बाह्यपदार्थस्य वस्तुसत्याभावात् अनाद्यविधावासनारोपितत्वेनाऽलीकत्वात् तत्र ज्ञानाकारस्य सतो रजतस्यारोपाभ्युगभात् योगाचारा असदधिष्ठानकान्तसद्रजतख्यातिरूपात्मख्यातिवादिनः । सौत्रान्तिकाना वैभाषिकाणाञ्च मते बाह्यपदार्थास्तित्वाभ्युगपगमात्ते उभयेऽपि बाह्यपदार्थरूपसदधिष्ठानकान्तस्सद्रजतख्यातिरूपात्मख्यातिवादिन. । एवमन्तस्सत्ख्यातिरूपात्मकख्यातिवादो द्विविध. ।

बहिस्सत्ख्यातिवादान्तर्गतो व्यवहितदेशान्तरसत्ख्यातिवादोऽपि द्विविधः । एकत्र इदमिति रजतमिति च ज्ञानद्वयम्, अपरत्र चेद रजतमिति विशिष्टज्ञानमेकम् ।

तत्र ज्ञानद्वयवादो ख्यातिवाद इत्युच्यते । ख्यातिरिति विशिष्टज्ञानम् । ज्ञानत्वेन तत्सदृश ततो भिन्नञ्च ज्ञानद्वयम्-अन्यतत्सदृशवाचि न पदघटितेन

"अख्याति" पदेन व्यपदिश्यते। ज्ञानद्वयरूपख्यात्यात्मकत्वादेव "अख्याते" इति ख्यातिवादमध्यपरिगणनमुपपद्यते।

अख्यातिवादिनामयमभिप्रायः-सर्वं ज्ञान यथार्थमेव। अयथार्थज्ञान नाम न किञ्चिदस्ति "इद रजतम्" इति विशिष्टज्ञान नेष्यते। तदभ्युपगमे इद पदार्थे रजताभावात् भ्रान्तिस्वीकारापत्तेः। ज्ञानद्वयाभ्युगमे च न स दोषः। "इदम्" इति पुरोवर्त्तिन. प्रत्यक्षज्ञान यथार्थम्। "रजतमिति च स्मर्यमाणा-पणस्थरजतगोचरस्मृतिरूपज्ञानमपि व्यवहितापणादिस्थलसद्रजतगोचरत्वेन यथार्थमेव। स्मृतौ "तद्रजतमि"ति भानन्तु दोषबलात् तत्तायाः प्रमोषात् न सम्भवति। इदमिति रजतमिति च ज्ञानद्वयस्य तद्विषययोश्च विवेकाग्रहाद् रजतार्थिनः शुक्तिरूपपुरोवर्तिपदार्थादानरूपोऽयथार्थव्यवहारो भवति। यत्र भ्रमोवादिभिस्स्वीक्रियते तत्र भेदाग्रहेणैवोपपत्तौ सम्भवन्त्या पृथग्भ्रमो नाङ्गी-कर्त्तव्यः।

सांख्या अख्यातिवादिन इति पञ्चपादिका[1]-विवरण[2]-तत्व-दीपनादि[3] प्राचीनग्रन्थेषु परिमला[4]दिनवीनग्रन्थेषु च निरूपितमुपलभ्यते। 'सदसत्ख्याति-र्बाधाबाधाभ्याम्' इति साख्यषडध्यायीगतसूत्रेण साख्या. सदसत्ख्यातिवादिन इति साख्यप्रवचनभाष्ये विज्ञानभिक्षुर्वदति।[5] लघुमञ्जूषाया नागोजीभट्टोऽपि विज्ञानभिक्षुमनुसरन्नेवमेव ब्रवीति। तथाचाऽख्यातिवादिनो बहिर्देशान्मरसद्रजत ख्यातिवादिनो भवन्ति। वहिर्व्यवहितापणादिदेशान्तर-स्थितमेव रजतम् इदम्पदार्थे पुरोवर्तिनि शुक्तिकादौ आरोप्य 'इदं रजतम्' इति विशिष्टज्ञानं भ्रान्तिरूप जायत इति नैयायिका वैशेषिकाश्चाभिवदन्ति। अन्यत्-शुक्त्यादिकम्, अन्यथा-रजतादिरूपेण, ख्याति-भातीति-अन्यथाख्यातिः। अन्यथाख्यातिवादिनां भ्रमे भासमान सर्वमपि सदेव। यथा शुक्तयादिरूप इदम्पदार्थो विशेष्यः पुरो-

---

१. पञ्चपादिका पृष्ठ—
२. विवरणप्रमेयसंग्रहः पृष्ठ—३४
३. तत्वदीपन पृष्ठ—७०—७५
४. परिमल (टीका) पृष्ठ—७
५. सांख्यप्रवचनभाष्यम् अ० ५-५६ पृष्ठ—२३२-२३३
अत्र सांख्यसूत्रवृत्तिः—
"इद रजतमिति पुरोवर्त्ति विषयतया सत्, अबाधनात्। रजतविषय-तया त्वसत् बाधात्। तस्मात्सदसती तत्वम्।
—पृष्ठ—२०६ (५-५६)

देशे सन्, तथैव रजतादिरूपः प्रकार. तत्सर्गश्चापणस्थले सन्नेव। तथा च तेषामपि सत्ख्यातिवादिषु समावेशः।

इयमेवान्यथाख्यातिर्भाट्टानामप्यभिमता। केचन विपरीतख्यातिवादिनो भाट्टा इति भेद पश्यन्ति। वस्तुतस्तु द्वयोर्वादयोरनन्यत्वमेव। विवेकाग्रहणमेव न भ्रान्तिरिति वक्तु शक्यते, अङ्गुलिनिपीडितदृष्टिः पुमान्' एक एवाय चन्द्रो न द्वौ' इत्येव चन्द्रस्य द्वित्वविवेक विस्पष्टमनुसन्दधानोऽपि चक्षुषा चन्द्रद्वित्व प्रतिपद्यते। कथमिय प्रतिपत्तिर्विवेकाग्रहनिमित्ता स्यात् ? एवमवगतदिक्कः पुरुषः सम्भ्रमे दिग्भ्रम प्राप्नोति। तत्रापि कथ विवेकाग्रहो निमित्ततामधिगच्छेत् ? कि च यदि सत्यरजतस्थले तादात्म्यमवभासते न शुक्तिरजतस्थले इति व्यवस्था तर्ह्यवभास्यभेदादवभासस्य वैलक्षण्यमनुसन्दध्यादेव। तथा च कथं रजतार्थी शुक्तौ प्रवर्तेत ? तस्माद्विशिष्टव्यवहारोपपत्तये चास्ति कश्चिद्भ्रमः इत्यवश्यमङ्गीकर्त्तव्यम् तत्र चाऽन्यत्र सन्त पदार्थ तदनधिकरणे देशे गृह्णातीतिअन्यथाख्यातिरेवैषा विपरीतख्यात्यपरपर्यायाऽभ्युपेतव्येतिभाट्टा अभिवदन्ति। एवञ्च व्यवहितदेशान्तरसत्ख्यातिवादो द्विविधः-अख्यात्यन्यथाख्यातिरूपात्सिद्धः।

बहिस्सत्ख्यातिवादान्तर्गतो द्वितीयः पुरोदेशसत्ख्यातिवादः। अयमपि द्विविधो भवितुमर्हति-पुरोदेशे पूर्वमेवोत्पन्नसद्रजतादिख्यातिवादः, प्रतीतिकालोत्पन्नसद्रजतादिख्यातिवादश्चेति। तत्र प्रथमवादावलम्बिनः भगवद्रामानुजीया. आर्हताश्च। भगवद्रामानुजीयाना मते "यथार्थं सर्वविज्ञानमिति वेदविदा मतम्" इत्यभ्युपगमात् शुक्त्यादिपदार्थोत्पत्तिकाल एव रजतादिकमपि तत्रोत्पन्नम्, परन्तु शुक्त्यंशभूयस्त्वाद्रजतांशाप्रतीति.। भ्रमकाले दोषबलात् शुक्त्यंशतिरोधानेन रजताशस्य विद्यमानस्यैव ग्रहः। दोषापगमे भूयोशग्रहणम् रजताशस्य अल्पत्वात् रजतादिकार्यकरत्वं नास्ति। अख्यातिवादिना प्राभाकराणामेतेषाञ्च सर्वविज्ञानाना यथार्थ्याभ्युपगमाशे तौल्येऽपि प्राभाकराणा पुरोदेशे रजत नास्ति रामानुजीयानांत्वस्तीति भेदो वर्त्तते। आर्हतानामपीदमेव मतम्।

भट्टभास्करादयः पुरोदेशे प्रतीतिकालोत्पन्नसद्रजतख्यातिवादावलम्बिनः। एव च सत्ख्यातिवाद.-अन्तस्सत्व-व्यवहितबहिर्देशसत्वरूप पूर्वोक्तरीत्या प्रत्येक द्वैविध्येन षड्विधसम्पन्न।

तृतीय.-सदसत्ख्यातिवादः। न्यायवार्त्तिकतात्पर्यटीकाया श्रीवाचस्पतिमिश्रैरय वादो निरूपित.-'इद रजतम्' इत्यादि भ्रमे भासमानस्ससर्गः असन्, रजतन्त्वापणस्थ सदेव। तथा च रजतस्य स्वरूपतस्सत्वम्, असत्ससर्गविशिष्टरूपेण चासत्त्वम् इति सदसद्रूप विज्ञानमिति। इदञ्च मतं नैयायिकैकदेशिनामिति प्रतीयते। यथा अद्वैतिनां मते सत्यानृतयोरात्मानात्मनोरन्योन्याध्यासे-

आत्मनस्स्वरूपतस्सत्यत्वम्, अनात्मससृष्टरूपाधिष्ठितत्वेन च मिथ्यात्वम् तद्वत् रजतादेरपि स्वरूपतस्सत्वम् । असत्ससर्गरूपेणासत्वञ्चोपपद्यत इति सदसत्-ख्यातिवादः ।

तुरीयश्च-सदसद्विलक्षणख्यातिवादोऽद्वैतिना श्रीशकरभगवत्पादानुयिनाम् । ते हि असच्चेन्न प्रतीयते सच्चेन्न बाध्येत । प्रतीयते बाध्यते च रजतम् । तस्मात्तत् सदसद्विलक्षणम् इत्याशेरते । सदसद्विलक्षणत्वमेवानिर्वचनीयत्वम्, सत्वासत्वाभ्यां निर्वक्तुमशक्यमनिर्वचनीयं भवति न तु सर्वथा निर्वक्तुमशक्य-मनिर्वचनीयमिति सदसद्विलक्षणख्यातिवादः ।

तदयमत्र निष्कर्ष —

१—असदधिष्ठानकासत्ख्यातिः शून्यवादिना माध्यमिकानाम् ।

२—सदधिष्ठानकासत्ख्याति. द्वैतिना माध्वानाम् ।

३—असदधिष्ठानकान्तस्सत्ख्यातिरूपात्मख्याति विज्ञानवादिना योगा-चाराणाम् ।

४—सदधिष्ठानकान्तस्सत्ख्यातिरूपात्मख्याति. सौत्रान्तिकवैभाषिकाणाम् ।

५—बहिर्व्यवहितदेशान्तरसत्स्मर्यमाणरजतानुभूयमानेदम्पदविषयकस्मृति-प्रत्यक्षरूप-ज्ञानद्वयात्मकाख्याति प्रभाकराणा सांख्यानाञ्च ।

६—बहिर्व्यवहितदेशान्तरस्थरजतविशिष्टेदम्पदार्थ-ख्यातिरूपान्यथाख्यातिः वैशेषिकनैयायिकभाट्टानाम् ।

७—बहिःपुरोदेशे शुक्तिसमकालोत्पन्नसद्रजतख्यातिरूपसत्ख्यातिः भवद्रा-मानुजीयानामार्हतानाञ्च ।

८—बहिःपुरोदेशे रजतप्रतीतिकालोत्पन्नसद्रतख्यातिरुपसत्ख्याति. भट्ट-भास्करादीनाम् ।

९—स्वरूपतस्सत्वेपि असत्ससर्गविशिष्टरूपेणासत्वात्सदसद्रूपरजतख्यातिः नैयायिकैकदेशिनाम् ।

१०—सदसद्विलक्षणानिर्वचनीयरजतख्यातिरद्वैतवादिनाम् ।

एता एव ख्यातयः प्रकारान्तरेण सप्तविधा भवितुमर्हन्ति ।

१—असत्यधिष्ठानेऽसतः ख्याति. माध्यमिकानाम् ।

२—असत्यधिष्ठाने सतः ख्यातिः योगाचाराणाम् ।

३—सत्यधिष्ठाने सतः ख्यातिः माध्वानाम् ।

४—सत्यधिष्ठाने सतः ख्यातिः सौत्रान्तिकवैभाषिक-वैशेषिक-नैयायिक-भाट्ट-विशिष्टाद्वैति-जैन-भट्टभास्करादीनाम् ।

५—सत उभयस्य परस्परससर्गं विना ज्ञानद्वये ख्याति. प्राभाकराणा साख्यानाञ्च ।

६—सत्यधिष्ठाने सदसत्ख्यातिः नैयायिकैकदेशिनाम् ।

७—सति सदसद्विलक्षणख्यातिः अद्वैतिनामिति ।

एव दार्शनिकाः स्वस्वसिद्धान्तानुसारेण स्वीयं लक्ष्यं व्यवस्थापयितुं ख्याति-भेदान् प्रतिपादयाम्बभूवुः । तत्र शुक्त्यादौरजतादिप्रतीतिदृष्टान्तेन परस्मिन् ब्रह्मणि प्रपञ्चप्रतीतेरपिअनिर्वचनीयत्वसिद्धौ निष्प्रपंचाद्वितीयब्रह्मणस्सिद्धिरिति लक्ष्यमद्वैतिनाम् ।

असदधिष्ठानकासत्ख्यातिवादिनां सर्वशून्यत्वसिद्धिर्लक्ष्यम् ।

सत्ख्यातिवादिना सर्वेषामपि द्वैतिनां प्रपञ्चमिथ्यात्वं सर्वशून्यत्वं वाऽनिच्छता द्वैतसत्यत्वसिद्धिर्लक्ष्यम् ।

तत्राख्यातिवादिना प्राभाकराणाम् विशेषतो लक्ष्यमिदम् -यत् वेदवाक्य-जन्यबोधस्य प्रामाण्यस्वतस्त्वस्य-अप्रामाण्यशङ्कालेशविनिर्मोहकेन निर्वाहः ।

अन्यथाख्यातिवादिना भाट्टानान्तु-प्रपञ्चस्य नित्यत्वे सिद्धे वेदानामपि नित्यत्वं प्रसिध्यति एव हि सति नित्यवेदवाक्यजनितज्ञानस्य चिरमन्वेषणेऽपि पुरुषसम्बन्धिभ्रमप्रमादाशक्तिविप्रलिप्सादोषसस्पर्शाभावादनपवाद स्वतस्सिद्धं वेदाना प्रामाण्यं लक्ष्यम् इति ।

## षष्ठः परिच्छेदः

# "ज्ञानस्य प्रत्यक्षत्वानुमेयत्व विमर्शः"

अत्रेदं किञ्चिद्विचार्यते-ज्ञानस्य प्रमाणत्वे किमिदं ज्ञानं फलस्वभावम्। उत क्रियास्वभावमिति। तदर्थमिदं चिन्तनीयम्-किं तत्प्रत्यक्षम्? उतानुमेयमिति। तत्सिध्यर्थमिदं विचारणीयम्-किं ग्राह्यग्राहकयोरभेदः? आहोस्विद भेदः? तत्सिध्यर्थञ्चेदं चिन्तनीयम्-किं ज्ञानं निरालम्बनम्? उत सालम्बनम्? इति। यदि निरालम्बनम् तर्हि ग्राह्यग्राहकयोरभेदः, तेन च तत्प्रत्यक्षम् फलस्वभावञ्च। यदि वा सालम्बनम् तर्हि तयोर्भेदः तेन च तदनुमेयम्, क्रियास्वभावञ्चेति फलाफलिभावः।

### क "निरालम्बनवादः"

तत्र प्रकाश्यप्रकाशयोस्तावदभेदोऽनुभवसिद्धः। यत्प्रकाशते तत्प्रकाशादभिन्नम्, यथा प्रदीपः, प्रकाशते च नीलादिः, तस्मात्प्रकाशादभिन्नस्स इति प्रयोगोऽपि भवति। नीलादेः प्रकाशाद्भेदे स्वीक्रियमाणे तस्य प्रकाशमानत्वस्यैवानुपपत्तिः प्रकाशमानत्वस्य परायत्तत्वे तस्य प्रकाशः परेणापि कर्त्तुं न शक्यते, यथा नरस्य तुरगत्वम्। नरे नित्यमप्रकाशमानस्य तुरगत्वस्य प्रकाशो न परेण भवितुमर्हति। तथैव नीलादेस्स्वरूपमेव न सिध्येत्। अतश्च नीलादेः पराभिमतं नीलत्वं परापेक्षां विना यथा सिद्धं, तथैव नीलादेः स्वयम्प्रकाशत्वमभ्युपगन्तव्यम्। तेन च तस्य प्रकाशापरपर्यायविज्ञानादभिन्नत्वम्। तस्मादेव च निरालम्बनत्वं विज्ञानादभिन्नत्वम्। तस्मादेव च निरालम्बनत्वं विज्ञानानां सिध्यति।

किञ्च, यदि विज्ञानाद्भिन्नोऽर्थस्तर्हि स कथं ग्राह्यः? किं वा तत्र ग्राह्यत्वम्? इति निरूपणीयम्। न तावदर्थत्वलक्षणं ग्राह्यत्वं भवितुमर्हति, अर्थत्वं च चराचरात्मकजगतो वर्तत इति घटज्ञाने सर्वस्य जगतो ग्राह्यत्वं स्यात् नापि प्राकट्याश्रयत्वं व्यवहाराश्रयत्वं व ग्राह्यत्वम् भूतभविष्यतोस्तदसम्भवेनाग्राह्यत्वप्रसंगात्। न हि धर्मीधर्मश्चाप्रत्यक्षः तदाश्रयश्च प्रत्यक्ष इति युक्तम्। नापि हेतुत्वं ग्राह्यत्वमिति युक्तम्, इन्द्रियादेरपि हेतुत्वाद्ग्राह्यत्वप्रसक्तिः। न च सदृशत्वे सति हेतुत्वम्, इन्द्रियाणि च न सदृशानि। अतो नातिप्रसक्तिरिति

वाच्यम् । समनन्तरप्रत्ययस्यापि विज्ञानग्राह्यत्वं स्यात् । समनन्तरजायमान-प्रत्ययस्य 'पीतमिदम् इत्यादे' ज्ञानत्वेन साहश्यमस्ति, अस्ति च हेतुत्वम् । अतो नीलज्ञानस्य पीतमपि ग्राह्यं, स्यात् । न चेन्द्रियादि' यत्सम्बद्ध ज्ञानं जनयति स ग्राह्य इति सरूपज्ञाने रसस्यापि ग्राह्यत्व स्यात् । अतो विज्ञानाद्भिन्नस्य ग्राह्यत्वायोगात् अवभासमानानां नीलपीतादिराकारो ज्ञानानामेवेति निरालम्बन-तैव तेषामिति सिद्धम् ।

## (ख) सौत्रान्तिकमतम्

सौत्रान्तिकास्तु-ज्ञानस्य साकारत्वमङ्गीकृत्यापि तदाकारसमर्पकहेतुत्वेन-बाह्यमपि क्षणिकं स्वीकुर्वन्ति । ज्ञानाकारसमर्पणक्षमहेतुत्वमेव ग्राह्यत्वम् ।[१] कादाचित्कस्य विचित्ररूपस्य नीलादेर्ज्ञानाकारस्य करणवैचित्र्यमन्तरेणानुपपत्ते , समनन्तरप्रत्ययबलेन तदुत्पत्तौ, तेपामेकरुपत्वेन नीलबुद्ध्यनन्तर नीलबुद्धिरेव न पीतादिबुद्धिरिति प्रसगात्, विचित्राकारसवेदनबलेन तदाकारसमर्पणक्षमहेतुत्वेन विचित्र कारण यत् स एव बाह्योऽर्थः । तस्माज्ज्ञानस्य साकारत्वेऽपि बाह्य ग्राह्यत्वमविहतमित्यसिद्धो बाह्यलक्षणयोग इति वदन्ति ।

## (ग) निरालम्बनवादिन आक्षेपः

अत्र विज्ञानवादिनः कार्यवैचित्र्यकल्प्येभ्यो विचित्रशक्तिभ्यस्समनन्तरप्रत्ययेभ्य एव विचित्रकार्योत्पत्तिसम्भवात्, स्वप्नावस्थासु ज्ञानवैचित्र्यस्यासत्यप्यर्थसन्निधावनुभूयमानत्वेन तस्य समनन्तरप्रत्ययवलेनैव सिद्धिरिति जाग्रदवस्थायामपि तथैव सिद्धेः ज्ञानाद्भिन्नस्य ग्राह्यलक्षणायोगान्नीलादेश्च ग्राह्यत्वात्तस्य ज्ञानात्मकत्वमेवेत्युत्तरयन्ति ।

किञ्च, ज्ञानार्थयोः नियतसहोपलम्भनियमादपि ज्ञानाकारत्वमर्थस्य सिद्ध्यति ।[३] तथाहि यद् येन नित्यसहोपलम्भं तत्ततो न भिद्यते, यथा—एकस्मा-

---

१. 'भिन्नकाल कथ ग्राह्यमिति चेद्बाह्यता विदुः ।
हेतुत्वमेव न युक्त ज्ञानाकारार्पणक्षमम् ।।"
—शास्त्रदीपिका अ० १, पा० १, अ० ५ पृष्ठ—५३

२. "न हि सवित्तिसत्तयैव तद्वेदना युक्ता, तस्याः सर्वत्राविशेषप्रसगात् ।
तान्तु सारूप्यमाविशत् सरूपयितुं घटयेत् ।"
—शास्त्रदीपिका अ० १, पा० १, अ ५, पृष्ठ—५३.

३. "ज्ञानार्थयो. अनियमव्याप्त भेद व्य.पकविरुद्धोपलब्ध्या प्रतिवेद्य न भेदमुपस्थापयति, भिन्नाना घटपदादीना अनियतसहोपलम्भत्वात्-इति शास्त्रदीपिकाया पार्थसारथिमिश्रः पृष्ठ—५४

च्चन्द्रोद्वितीयश्चन्द्रः, नियतसहोपलम्भ च ज्ञानेन नीलम्, अतो ज्ञानादभिन्नम्। तथा यद्यतो भिद्यते तत्तेन नियतसहोपलम्भं न भवति, यथा नील पीतेन इत्यन्वयव्यतिरेकाभ्यां ज्ञानादभिन्नमेव नीलम्।

किञ्च, येऽपि वाह्य वस्तु ग्राह्यमित्यास्थिषत, तैरपि ज्ञानसिद्धिरवश्याभ्युपगमनीया। न च तस्याप्रत्यक्षस्य सिद्धिर्भवितुमर्हति, लिङ्गाभावात्। अर्थः, अर्थधर्मः, ज्ञानजन्मा, व्यवहारो वा लिङ्गं न भवितुमर्हतीति पूर्वमवोचाम। तस्मादप्रत्यक्षे ज्ञानस्वरूपमेव न सिध्येदिति सर्वरूपमेव ज्ञानं स्वप्रकाशमानादिवासनावशात् स्वाकारमेव वाह्यमध्यवस्यन्मिथ्येति सिद्धम्।[1]

## (घ) "मीमांसकपरिशीलनम्"

अत्र मीमासकाः पक्षमिममेव परिशीलयन्ति-निरालम्बनवादिना सर्वज्ञानानां बाह्यग्राह्यवैधुर्यं स्वाशालम्बनत्वं मिथ्यात्वञ्च ज्ञानेनैव साधनीयम्। येन ज्ञानेन तत्साध्य साधनीय भवति, तस्यापि तत्साध्ययोगित्वेन सर्वज्ञानसदृशत्वे साध्याप्रसिद्धिः। यदि च तत् न बाह्यग्राह्यविधुरम् न च स्वाशालम्बनम् न वा मिथ्येत्यन्यादृशम्, तर्हि हेतूना व्यभिचार इति न साध्यसिद्धिः।

सर्वज्ञानवत् स्वयमपि सर्वग्राह्यविधुरेण सर्वज्ञानगतं बाह्यग्राह्यवैधुर्यं स्वबहिर्भूत न शक्यग्रहम्। नापि स्वांशपर्यवसायिना सर्वज्ञानगत तादृशत्वमस्वांशभूतं ग्रहीतु शक्यम्। न चापि स्वय मिथ्याभूतेन ज्ञानान्तरगत मिथ्यात्व शक्यावगमम्, मिथ्यात्वग्राहकस्य मिथ्यात्वे ग्राह्यभूतमिथ्यात्वाभावेन सर्वज्ञानानां याथार्थ्यप्रसंगान्न साध्यसिद्धिः। सर्वज्ञानविसदृशत्वे तत्रैव विविधसाध्यप्रतिबद्धानामपि हेतूनां व्यभिचारः स्फुट इति भावः।

किञ्च, सर्वज्ञानाना प्रकाशादभिन्नत्वे निरालम्बनत्वे स्वाशालम्बनत्वे वा प्रकाशमानत्व हेतुः, न च स्वरूपासिद्ध. आश्रयासिद्धश्च। एवं हेतोः सपक्षसत्वविपक्षव्यावृत्योरपि तत एव दुरवगमत्वात् असाधारणानैकान्तिकत्व सन्दिग्धानैकान्तिकत्वञ्च भवेताम्।

ननु ज्ञान स्वप्रकाशम्, तेन प्रागुक्तदोषानवकाश इति चेन्न, हेतोः प्रकाशमानत्वस्य विपक्षव्यावृत्तिसिध्यर्थं विपक्षप्रकाशेऽङ्गीक्रियमाणे विपक्षज्ञानस्य स्वाकारभूताद्विपक्षादभिन्नत्वेन विपक्षाज्ञानत्वेन स्वयं प्रकाशत्वाच्च तत्रैव प्रकाशमानत्वस्य हेतोर्विपक्षवृत्तिलक्षणो व्यभिचारः यदि च प्रकाशमानत्वस्य हेतो. विपक्षव्यावृत्तिसिध्यर्थं विपक्षप्रकाशो नाङ्गीक्रियेत, तर्हि विपक्षव्यावृत्तेरे-

---

१. "नान्योऽनुभाव्यो बुद्धयास्ति तस्यानानुभवोऽपरः।
ग्राह्यग्राहकवैधुर्यात्स्वयं सैव प्रकाशते ॥"
—शास्त्रदीपिका पृष्ठ—५५.

वासि द्धेस्सन्दिग्धानैकान्तिकत्वमित्युभयतस्पाशा रज्जु; एव 'नीलमिदम्' इति ज्ञाने गोचरतया जडत्व ज्ञानान्तरग्राह्यत्व ज्ञानव्यतिरेकञ्च प्रतिषेधति निरालम्बनवादी। तत्र प्रतिषेध्यतया प्रकाश्यस्य ज्ञानाकारत्वेन ज्ञानादभिन्नत्वाद् ज्ञानमेव जडं ज्ञानान्तरग्राह्य ज्ञानव्यतिरिक्तञ्च सिध्येत्, निषेधं प्रतियोगिज्ञानस्यावश्यकत्वात्, तस्य च ज्ञानादभिन्नत्वात् इति संकटमापतेत्।

किञ्च, मीमासकसिद्धान्तसिद्ध सर्वं निरालम्बनवादिना प्रतिषेद्धव्यम्। प्रतिषेद्धयतया प्रकाश्य तत्सर्हं ज्ञानाकारत्वेन ज्ञानादभिन्नमेष्टव्यम्। तथा सति मीमासकसिद्धान्तसिद्ध सर्वमपि परमार्थरूपमेव स्यात्। यदि च यथार्थज्ञानाकारस्य परमार्थत्वम्, अयथार्थज्ञानाकारस्य च अपरमार्थत्वमिति भेदमङ्गीकृत्य निरालम्बनवादिसिद्धान्तसिद्धगोचरज्ञानस्य परमार्थत्वात् तदाकारभूतमस्मत्सिद्धान्तसिद्धं यथार्थम्, मीमासकसिद्धान्तसिद्धान्तसिद्धगोचरज्ञानस्यापरमार्थत्वात्तदाकारभूतमीमासकसिद्धान्तसिद्ध सर्वमयथार्थमित्युच्यते, तर्हि भवत्सिद्धान्तहानिः। तथाहि—निरालम्बनवादिना हि ज्ञानगोचरस्य यथार्थत्वस्य विषयसत्यत्वनिबन्धनत्वं नाङ्गीक्रियते, तन्मते स्वरुपसत्यत्वनिबन्धनमेव ज्ञानस्य यथार्थत्वम्। यदि च तेन यथार्थत्वस्य ज्ञानगोचरस्य विषयसत्यत्वनिबन्धनत्वमुच्येत तर्हि सिद्धान्तहानिः। यदि वा नोच्यते, तर्हि मीमांसकसिद्धान्तसिद्धस्यापि स्वरुपसत्यत्वेन यथार्थत्वप्राप्तेः, तदाकारभूतस्य मीमांसकसिद्धस्यापि परमार्थत्वमवश्यमेष्टव्यं स्यात्।

किञ्च, निरालम्बनवादिनः प्रयोगवाक्यगतैः तत्तद्वाचकपदैः धर्मिदृष्टान्तयोः साध्यसाधनधर्मयोश्च प्रकाश्यत्वं स्वीकर्त्तव्यम्। तथासति तेषां तत्तत्पदजन्यज्ञानाकारत्वेन तत्तज्ज्ञानादभिन्नत्वाद् ज्ञानस्य च ज्ञानान्तरधर्मत्वानुपपत्तेः हेतोरपक्षधर्मत्वम् दृष्टान्तस्य च साधनविकलत्व साध्यविकलत्वञ्च प्राप्नुयात्। एव मीमांसकेन निरालम्बनवादिनः प्रयोगमुद्दिश्य यानि दूषणान्याविष्क्रियन्ते तेषां सर्वेषा तत्तद्वाचकैः पदैः प्रकाशिताना तत्तद्वाचकपदजन्यज्ञानादभिन्नत्वाद् ज्ञानस्य च सर्वत्र स्वरुपेण परमार्थत्वात् तदभिन्नानि तानि सर्वाणि दूषणान्यपि परमार्थरुपाणि भवेयुः। अत्यल्पमिदकेनचित् पुरुषेण विप्रतिपद्यमानेन मीमांसकेन निरालम्बनवादिनस्सौगतस्य शिरश्छिन्नम्' इति वाक्यमुच्चारितञ्चेत्-तत्र तद्वाक्यजन्यज्ञानविषयस्य तद्वाक्यजन्यज्ञानाकारत्वेन तदभिन्नत्वान्मीमांसककर्त्तृकसौगतशिरश्छेदोऽपि सम्पन्न.स्यात्।

यस्तु सहोपलम्भनियम उक्तः स तु ज्ञेयप्रकाशसमये ज्ञानप्रकाशस्यानभ्युपगमादसिद्धः, एकस्य नीलस्य युगपद्वहुभिरध्येक्ष्यमाणस्यैकेनेव अन्येनापि ज्ञानेन सहोपलम्भनियमासिद्धेः। यदि तत्र नीलादीनि प्रतिज्ञान भिन्नान्येवेति

मतम्, तर्हि यदेव त्वया दृष्टं तदेव मयापीति सम्प्रतिपत्तेरनुपपत्तिः। किञ्च, नीलतद्धियोस्सह भावस्त्वया साध्यते। स च भेदेन व्याप्तः। तस्मान्नीलतासिद्ध-योरभेद साधनेविरूद्धत्वञ्च हेतोस्स्यात्। यदि च द्विचन्द्रज्ञानमिव ज्ञानेन नीलस्य भेदसहभावौ प्रतिभासमानावपि भ्रान्तावेवेति[1] मतम्, तर्हि प्रतिभास-मानयोर्भेद सहभावयोर्ज्ञानाकारत्वेन ज्ञानादभिन्नत्वात् तस्य च सत्यत्वात् तद-भिन्नौ नीलतद्धियोर्भेदसहभावावपि सत्यौ स्याताम्। भ्रान्तत्वाच्च बाधाधीनम्। न चात्र किंचिद्बाधकमस्ति। अनुमानस्य बाधकत्वेऽन्योन्याश्रयप्रसग.। भेदप्रति-भासस्य भ्रान्तत्वे सप्यबाधितविषयत्वादनुमानोत्थानम्, अनुमानोत्थाने च सति तत्प्रतिभासस्य भ्रान्तत्वमित्यन्योन्याश्रयः।

यदुक्तं यत्स्वयं न प्रकाशते तत्परेणापि प्रकाशयितुमशक्यमिति, तन्न समीचीनम्। एतेनैव वाक्येनास्यैवार्थस्य पूर्वमस्मान् प्रत्यप्रकाशमानस्य प्रकाशितत्वादत्रैवानैकान्तिकत्वात्। "यावज्जीववह मौनी" इति वत्स्ववचन-विरूद्धत्वात्।

शास्त्रदीपिकायां पार्थसारथिमिश्रः निरालम्बनवादखण्डने हेतून् सगृह्णाति—

**अज्ञान-स्थिरचित्रत्व-बाह्यत्वादेरनात्मनः।**
**असतो वा सतो वापि कथं विज्ञानवेद्यता[2]॥**

'अहमज्ञः' इरि ज्ञाने ग्राह्यस्तु ज्ञानाभावः, तस्य ज्ञानात्मकत्वमत्यन्तमेव विरूद्धम् ज्ञानज्ञानाभावयोर्विपरीतत्वात्। प्रत्यभिज्ञाज्ञाने तदेवेदम् इत्यादौ पूर्वापरकालावस्थायित्व प्रकाशते। ज्ञानस्य क्षणिकस्य स्थायित्वमात्मा कथ सम्भवेत्? एवं चित्रत्वबुद्धेरप्युपपत्तिर्न भवेत्। एवं बाह्य नास्तीति निषेधयता निरालम्बनवादिना बाह्यं बुद्धावश्यमारोपयितव्यम्। ज्ञानातिरिक्तञ्च तद्बा-ह्यम्, तस्य ज्ञानाकारता न सम्भवति। अतो विज्ञानानामनात्मग्राहित्वमवश्यमे-ष्टव्यम् इति सग्रहश्लोकस्यार्थः।

किञ्च भाष्यकारेण श्रीशबरस्वामिना 'सर्व एव निरालम्बनः स्वप्न-वत्प्रत्ययः, प्रत्ययत्वात् 'इति प्रयोग प्रदर्श्य' स्तम्भ इति जाग्रतोऽपि बुद्धिः सुपरिनिश्चिता कथ विपर्ययिष्यति' इत्यादिना परिहारः प्रदर्शितः।[3]

---

१. "अविभागो हि बुद्ध्यात्मा विपर्यासितदर्शनैः।
ग्राह्यग्राहकसवित्ति भेदवानिव लक्ष्यते॥"

२. शास्त्रदीपिका पृष्ठ—

३. शबरभाष्य-अ. १, पा. १, अ. ५, पृष्ठ—२८-२९।

अत्राय प्रघट्टकार्थः :—

निरालम्ननत्वेन विशिण्टाः प्रत्ययास्साध्यन्ते निराबम्वनवादिना । तत्र विशेषणविशेष्ययोर्यज्ज्ञान तस्यापि निरालम्बनत्वात्तयोरप्रसिद्धि. । ततश्चाप्रसिद्ध-विशेषणत्वम्, अप्रसिद्धविमेष्यप्वम्, अप्रसिद्धत्वं च दूषण भवति । प्रत्यायानां सालम्वनत्वे तु तेनैवानैकान्तिकत्वात् नानालम्बनत्वसिद्धिः ।[1]

ननु किमिद निरालम्बनत्व नाम ? कि धर्मिणो भिन्नम् ? अभिन्न वा ? अन्त्ये विशेषणत्यासम्भवः । आद्ये तद्भेदग्राहिणो ज्ञानस्य मिथ्यात्वान्न भेद-सिद्धिः । यदि चालम्बनप्रतिषेधस्यावस्तुत्वान्न तत्र विकल्प प्रसरतीति मतम्, तर्हि अस्मान्प्रति तद्बोधनमनुपपन्न स्यात् । न ह्यवस्तु बुद्धिविषयो भवितुमर्हति, तद्विषयत्वे वा तस्य वस्तुत्वापातात् । यदि चावस्तुनोऽपि वस्तुत्व परकल्पयानु-मानव्यवहारः क्रियते प्रतिमायामिव देवतात्वमाराधनादि व्यवहार इति मतम् ,तर्हि अत्यन्तासतः कल्पनायोगात् । अन्यत्र प्रसिद्धसद्भाव हि देवतात्वमन्यत्र कल्प्यते । अनालम्बनत्वन्तु गगनकुसुमायमान न कल्पनार्हति । कल्पनापि निरालम्बनत्यस्य ज्ञानरूपा तदुत्पत्तौ च व्याप्रियमाण कथमवस्तु भविष्यति ? अतो नाय प्रयोग. साधुरिति । तस्माज्ज्ञानानां न निरालम्बनम् किन्तु सालम्बन च बाह्योऽर्थ. सच प्रत्यक्ष इति सिद्धम् ।

---

१. "अग्राह्यत्वाच्च भेदेन विशेषणविशेष्ययोः ।
अप्रसिद्धोभयत्व वा वाच्यमन्यतरस्य वा ॥३५॥
वक्तृश्रोत्रोश्च यज्ज्ञान विशेषणविशेष्ययोः ।
तन्निरालम्बनत्वेन स्वभागबाधो द्वयोरपि ॥३६॥
सम्भवो न च भेदस्य विशेषणविशेष्ययोः ।
(बोधस्येति पाठान्तरम्)
तस्मान्निरूपण नास्ति प्रतिज्ञार्थस्य शोभनम् ॥२७॥
निरालम्बकता नाम न किञ्चिद्वस्तु गम्यते ।
तेन तद्व्यतिरेकादौ प्रश्नो नैवोपपद्यते ॥३८॥
यद्यवस्तु कथंत्वस्मांस्त्व बोधयितुमिच्छसि ।
बुध्यसे वा स्वबुध्द्यत्व, कल्पितात्वथ साध्यते ॥३९॥
(कल्पयित्वाऽथ साध्यते इति पाठान्तरम्)
असतः कल्पना कीदृक् क्लृप्तो वस्तु प्रसज्यते ।
कथमिष्टमभावे चेद्वस्तु सोऽपीति लक्ष्यते ॥४०॥
—श्लोकवार्तिकम्-निरालम्बनवादः सू० ५. पृ. २२५-२६

## (ङ) "ज्ञानास्यानुमेयत्वं क्रियास्वभावत्वञ्च"

अथेदानी ज्ञानस्यानुमेयत्व क्रियास्वभावत्वञ्च निरूपयाम यदा 'ज्ञायत' इति ज्ञान कर्मणि ल्युडन्तो ज्ञानशब्दोऽनुशिष्यते, तदार्थो ज्ञानम् ।[1] यदा च 'ज्ञप्तिर्ज्ञान' 'ज्ञायतेऽनेने' ति वा भावकरणयोर्व्युपाद्यते तदा धीरेव ज्ञानम् । तच्चाप्रत्यक्ष क्रियास्वभावञ्च । तथाहि—गन्तव्यगताया. प्राप्तेः गन्तार प्रत्यसाधारण्य तदेकसमवायिक्रियाजन्यत्वमन्तरेणानुपपद्यमान भवति यथा, तथैव घटादिगतस्य प्राकट्यफलस्यापि कञ्चिदेव प्रत्यसाधारण्य तदेकसमवायिक्रियाजन्यत्वमन्तरेणानुपपद्यमान तदेकसमवायिना क्रिया कल्पयति, सैव च ज्ञान भवति पचतीति पाकक्रिया यथा कर्मभूते तण्डुले विक्लृत्तिरूप फल जनयन्ती सकर्मिका तथैव ज्ञानक्रिया सकर्मिका कर्मभूतेऽर्थप्राकट्यरूप फल जनयति । कार्यभूत तदेव फल कारणभूत ज्ञान कल्पयतीति सिध्यत्यप्रत्यक्षमपि ज्ञानम् । इन्द्रियसन्निकर्षाद्यनन्तर 'अय घट.' इति ज्ञाने जाते 'ज्ञातो मया घट' इति व्यवहरन्ति लोका । अत्र ज्ञानज्ञेययो ज्ञातृज्ञेययोश्च सम्बन्धौ प्रतीयेते । तत्र ज्ञातृज्ञेयसम्बन्धो मानसप्रत्यक्षगम्य· । स एव ज्ञानस्य कल्पक· । अथवाऽर्थगतो ज्ञानजन्योऽतिशय ज्ञानस्य कल्पकः । स एवातिशय प्राकट्यपदेन ज्ञाततापदेन चोच्यते । तच्च प्राकट्यभवगच्छत तदनन्तरभवत्वेन तद्धेतुक व्यवहार स्वस्मिन्नेव पश्यतश्च एव प्रत्यसाधरण्य सुगमम् । ततश्चाविशेषेण तस्य सर्वत्रापि तादृक्स्वभावत्वनिश्चयो भवति ।

## (च) "प्रकटतापदार्थस्थापनम्"

किञ्च, 'घटः प्रकाशते' 'घटो भाति' 'घटप्रकाश·' इत्यादयो व्यवहारा लौकै· क्रियन्ते । बाधकाभावाच्च नैते व्यवहारा· भ्रान्तिमूला । अतो दृढप्रतिपन्नतादृशव्यवहारमूलत्वेन प्रकाशविशिष्टोऽर्थ कल्पनीय· । स च विशेषणभूतः प्रकाशपदार्थ· प्राकट्यमिति निश्चीयते । सच प्रकाशपदार्थो घटसमानाधिकरण· । स एव ज्ञानस्य कल्पक·, ज्ञानाच्च भिन्न. । तस्य ज्ञानरूपत्वे घटसामानाधिकरण्यमनुपपन्न स्यात् । ज्ञान हि आत्मसमवेतमात्मसमानाधिकरणतयैव भासमानं कथ घटसमानाधिकरण स्यात् ? अन्यसमवेतस्यान्यसमानाधिकरणत्वेऽतिप्रसगात् । शब्दप्रयोगवलादपि ज्ञानप्रकाशयोर्भेदो भवति । 'घटो भाति' इतिवन्न 'घटो जानाति' इति प्रयोग. । 'घटं जानाति' इतिवच्च न 'घट भाति' इति प्रयोग. । ज्ञातप्रकाशयोरेकरूपत्वे जानातिपर्यायाणा भातिपर्यायाणाञ्च

---

१. "ज्ञान ज्ञायत इत्यर्थो धीर्भात्रे करणेऽपि वा"
(श्लो० वा० शून्यवादः श्लोक १२८)

साकर्यं भवेत् । न चैतदस्ति । अतश्च भानप्रकाशपदार्थो न ज्ञानपदार्थः । अतिरिक्तश्च प्रकाशपदार्थः ज्ञानस्य कल्पकः इति सिध्यति ।

## (छ) "प्रकटताया ज्ञानकल्पकत्वम्"

यदि च—ज्ञानवाचित्वेन जानाति भात्योस्तुल्यत्वेऽपि जानातेस्सकर्मकत्वम्, भातेश्चाकर्मकत्वम् । यथा—चलतिगच्छत्योरुभयो- स्पन्दाभिधायकत्वेऽपि गच्छति· सकर्मकः चलतिश्चाकर्मकः तयोश्च न साकर्यम्, तथैव जानाति भात्योरिति मतम्, तर्हि भाते. जानात्येकार्थत्वे ज्ञातृसमानाधिकरणार्थत्वप्रसंगः । चलतिरकर्मकोऽपि गन्तृसमानाधिकरणत्वमुन्मुच्य तदितरगन्तव्यादिसमानाधिकरणतां न भजते, तथा सत्येकसमवेतार्थाभिधायिनस्तदन्यसमानाधिकरणत्वेनाभिधाने भ्रान्तत्वप्रसगात् अतो ज्ञातृसमानाधिकरणजानातिपदार्थाद् घटसमानाधिकरणभातिभासत्यादिपयार्थो व्यतिरिक्त एवेति सिद्धम् । अतिरिक्तश्चाय प्रकाशपदार्थो ज्ञानस्य कल्पकः । एवञ्च ज्ञानार्थयो-र्विषयविषयिभावसम्बन्धात् प्रतीतिकर्मतायाश्च विषयत्वात् ज्ञानजन्यः पदार्थगतातिशयविशेषस्य ज्ञानकल्पकत्व सिद्धम् । तत्र प्रतीतिरिति क्रिया, अस्यात्मा कर्त्ता, इन्द्रियाणि करणम्, अर्थः कर्म । तद् येयमर्यस्य प्रतीतौ कर्मकारकता तदेव तस्य विषयत्वम्, तच्च रूप प्रतीते· प्राग्भूत परस्ताच्च निष्पद्यत इत्यवश्यमाश्रणीयम् । अन्यथा ज्ञाताज्ञातयोरविशेषप्रसग· । तदेव ज्ञाततादिपदवाच्य ज्ञानज्ञाने लिङ्गम् । तच्च प्रत्यक्षेऽर्थे[1] प्रत्यक्षावगतं ज्ञान यथाकल्पयति, तथैवानुमाने अनुमितेऽप्यर्थे

---

१. विषयोऽय न्यायरत्नाकारे पार्थसारथिना शून्यवादे 'नान्यथा ह्यर्थसद्भावः इति श्लोकव्याख्यानावसरे (श्लोकवार्त्तिकम् शून्यवादः श्लो० १८२) स्पष्ट निरूपितम् । तथाहि—किं पुनर्ज्ञानस्य ग्राहकं प्रमाण, किमिति वा तत्पश्चादेवोपजायते न पूर्वम् अतआह—

"नाऽन्यथा ह्यर्थसद्भावो दृष्टः सन्नुपपद्यते ।
ज्ञान चेन्नेत्यतः पश्चात्प्रमाणमुपजायते ॥"

अर्थापत्तिज्ञानस्य प्रमाणं, सा चार्थस्य ज्ञातत्वाऽन्यथानुपपत्तिप्रभवा प्रागर्थस्य ज्ञातत्वाऽभावान्नोत्पद्यते, ज्ञातेत्वर्थे पश्चात्तज्ज्ञानत्वाऽनुपपत्याऽर्थापत्तिप्रमाणमुपजायते, तद्युक्त पूर्व त्वग्रहण पश्चाच्च ग्रहणमिति । ननुज्ञानकर्मत्वं ज्ञातत्व, तत् प्रथम ज्ञाते ज्ञानेऽवगम्यते, अनवगत च कथं ज्ञान कल्पयेत्, तदितरेतराश्रय, ज्ञानाऽवगमे ज्ञातत्वावगमस्तदवगमे च ज्ञानाऽवगम इति ।

तत्र केचिदाहुः— सर्वथा तावदस्ति ज्ञानम् । तथाहि, विद्यमान एव हि घटः कस्यचिदेव व्यवहारयोग्यतामापद्यते न सर्वेषां, नापि

सर्वदा, तदवश्यं यो यदा तेन व्यवहरति तस्य तद्व्यवहारानुगुणः कश्चिदतिशयः सजात इति कल्पनीय स ज्ञानमिति। सत्यम्, एवं सिध्यति ज्ञान, किन्तु प्रागपि व्यवहारादवगम्यते ज्ञानम्, अव्यवहरन्नपि ज्ञातोऽयमर्थो मयेति आत्मनार्थस्य ज्ञानत्वमनुसधत्त इति सर्वजनीनमेतत्, न ज्ञानमविदुषा ज्ञातत्वरुप शक्यं वेदितु, यदेव प्रागेव व्यवहारादुपजायमानो ज्ञातत्वाऽवगमोऽसति ज्ञानस्य प्रत्यक्षत्वे कथमुपपद्यते ।

अत्राहुः । ज्ञानजन्योऽर्थतः कश्चिदतिशयः प्रकाशनभासनादिपर्यायपदवाच्यः, स च पाकजन्यौदनादिगताऽतिशयवदनवगतेऽपि ज्ञाने शक्यतेऽवगन्तुम्, अतः ज्ञानस्य कल्पक इति, सत्यमस्त्यतिशयः, स च प्रत्यक्षेऽर्थे प्रत्यक्षावगतः कल्पयेदपि ज्ञानम्, अनुमानादिषु तु तस्याप्रत्यक्षत्वात् प्राग्व्यवहारात्तद्व्याप्तलिङ्गाभावादप्रमितस्य चा कल्पकत्वान्न ज्ञान कल्पयेत्, अनुमितेऽपि चार्थे ज्ञातो मयाऽग्निरिति अग्नि ज्ञातमनुसधत्ते, ऽतस्तत्व वक्तव्य, ज्ञाने प्रमाणमुच्यते ज्ञानक्रिया जानितो ज्ञातुर्ज्ञेयेन सहाप्तसंबन्धः, स मानसप्रत्यक्षावगतो ज्ञान कल्पयति सत्या जिज्ञासाया यत्रापि च कश्चिदर्थमनुभूय तद्विषय ज्ञानेमकल्पयित्वैव कालान्तरे तमर्थ स्मरति तत्रापि स्मृतिज्ञानेनैवात्मनोऽर्थस्य च दृश्यद्रष्टृत्वसम्बन्धे निष्पन्ने मानसप्रत्यक्षेण चाऽवगते तद्बलेन च ज्ञाने कल्पिते तस्य ज्ञानस्येन्द्रियादि प्रत्युत्पन्नकारणाऽसम्भवेन स्मृतित्वं निश्चित्य तदनुपपत्या पूर्वानुभवः कल्प्यते, यथोक्त 'तदैव ह्यस्य सविक्तिरर्थापत्योपजायते' इति । स एवात्मनोऽर्थेन सम्बन्धो दृष्टृत्वज्ञातत्वादिपदैरभिधीयत इति । कः पुनरसौ सम्बन्धः, उक्त प्राप्तिरिति। येऽपि च स्वप्रकाशा सविदं मन्यन्ते तेषामपि स्वोत्पत्तिसमये सवित्तिः कर्त्तार वेद्य च भासयति न तु स्वस्य वेत्तुर्वा सवेद्यसम्बन्ध, तस्य तदा निष्पन्नत्वेनासत्वात्ततो निष्पन्नाया सवित्तौ तस्याः कर्त्तुश्च तवाद्द्वारा विषयसम्बन्धे जाते ततो मानसेनैव प्रत्यक्षेणार्थेन सह सवित्तेः सवित्तुश्च सम्बन्धोऽवभासत इति अङ्गीकर्त्तव्यम्, सविदन्तरोत्पत्तिसमये च पूर्वसविदो नष्टत्वान्न तद्धर्मत्वेन सवेद्यसम्बन्धः शक्यते प्रत्यक्षेण ग्रहीतुमिति सवेतृधर्मभूत एव सवेद्यसम्बन्धः सर्वजनीनः प्राप्तिपर्यायो गृह्यत इति तत एव सवित्तिरुपक्रियाकल्पनासिद्धेरल स्वप्रकाशतया । तत्सिद्धमुत्पत्तिवेलायामर्थस्यदृष्टृत्वाऽभावेन फलांशाऽभावान्नज्ञान गृह्यते पश्चात्तु दृष्टत्ववशेन गृह्यत इति ।

न्यायरत्नाकर टीका

'ज्ञातो मयाऽग्निरिति ज्ञानमग्निमनुसन्धत्ते । अतस्तत्रापीद ज्ञानज्ञाने लिङ्गम् । ज्ञानस्यानुमेयत्व क्रियास्वभावत्वम् । अर्थस्य च प्रत्यक्षत्व सिद्धम् ।

## (ज) "अत्र प्राभाकरमतम्"

प्राभाकरास्तु सविद. स्वयम्प्रकाशत्वमभ्युपगच्छन्त. तस्यानिराकारत्व व्यवस्थापयन्ति । तथाहि—सविन्मात्रे त्रितय भासते-प्रमाता, प्रमिति, प्रमेयञ्चेति । इदमेव त्रिपुटीज्ञानमिति व्यवह्रियते । नीलाद्याकार प्रमेय, प्रमितिश्चानकारा प्रमाता चेति 'नीलमह जानामि' इत्यादौ प्रतीयन्ते । तत्र मितिश्च ज्ञानाद्युपात्ता नीलपदास्पद प्रमेयम्, उत्तमपुरुषेण च प्रमाता । एव प्रतीतौ प्रत्यक्षमेव प्रमाणम् । साक्षात्प्रतीति प्रत्यक्षम् इति प्रत्यक्षलक्षणम् । त्रितयस्य साक्षात्कारो भवतीति प्रत्यक्षमेवात्र प्रमाणम् । तत्रापि मितेः स्वयम्प्रकाशता, मातृमेययोस्तु पराधीनः प्रकाशः । सविदस्तु प्रकाशो न परायत्तः । तत्रापि सबिद्गोचरस्योरपि मातृमेययौ. मेयस्यैव कर्मभाव., न प्रमातु. । यथा "देवदत्तो ग्राम गच्छति" इत्यत्र गमनक्रिया फलसयोगविभागगामित्वे ग्राम देवदत्तयोस्समानेऽपि ग्रामादेरेव कर्मभाव, न गन्तु, एव प्रमाणफलसवित्तिसम्बन्धाविशेषेऽपि मातु कर्तृता, मेयस्य च कर्मता । कर्मत्वञ्च परसमवायिक्रियाफलभागित्वम् । तच्च यथा ग्रामे तथा प्रमेये । अतो निराकारा सवित् स्वय भासमाना मातृमेयावपि व्यवस्थापयति ।

सविद. स्वयम्प्रकाशत्व व्यवस्थापयता प्राभाकराणामयमाशय —'नीलमह जानामि' इत्यत्र प्रमाता आत्मा कर्त्तैव भवति न कर्म, स च जडः । नीलादिश्च विषयो जड एव । यदि ज्ञानमपि जड स्यात्तर्हि विश्वस्य जगत आन्ध्य प्रसज्येत । तस्माज्ज्ञान स्वप्रकाशम् स्वप्रकाशम् अर्थात्मनोश्च प्रकाशम् आत्मान चाश्रयविधया प्रकाशयति, विषयविधया च नीलादिकम् । तत्र प्राचीननवीनभेदेन मतद्वयमुपलभ्यते । प्राचीनमते यद्यपि ज्ञान न स्वात्मान विषयीकरोति न वा आत्मानम्, तथापि तादात्म्येन स्वस्मिन् व्यवहार प्रयोजयति, स्वसमवायेन चात्मनि व्यवहार प्रयोजयति इति ।

नवीनमते च ज्ञान स्व स्वाश्रयञ्च विषयीकुर्वत् स्वव्यवहार स्वाश्रयव्यवहारञ्च प्रयोजयतीति । इदमेव पूर्वमतादस्य लक्षण्यम् । वैसर्वमिद श्रीङ्गेशोपाध्यायाना तत्वचिन्तामणिपर्यालोचनेनावगम्यते इति ।[1] एतेषा मते 'पूर्व बुद्धिरुत्पद्यते न तु पूर्व ज्ञायत' इति शबरस्वामिन उक्तिरसगता भवेत् ।[2]

१. तत्वचिन्तामणि श्लोक २ ।

२. शबर भाष्यम्-अ १, पा० १। अ० ५। पृष्ठ—३३ ।

तामसगति बुद्धिसविच्छब्दयोर्भिन्नार्थकत्वमङ्गीकृत्य परिहरन्ति । आत्ममनस्स-योगो बुद्धि सैव ज्ञानपदेनाप्युच्यते । सवित्तु फलभूताऽनुभवादिपदाभिधेया । सा च स्वयम्प्रकाशा । स्वयम्प्रकाशत्वञ्च-स्वसम्बद्धव्यवहारे सजातीयज्ञानान्तरा-पेक्षानियतिराहित्यम् । सविद· स्वव्यवहारे सविदन्तरनैरपेक्ष्येण स्वप्रकाशत्वम् मातृमेययोस्तु स्वव्यवहारे सविदपेक्षत्वात् पराधीनप्रकाशत्वम्, अत्र च प्रमाण-मनुमानम्-घटादिसविद्व्यवहार सविन्नितबन्धन·, तदरन्तर जायमानत्वात् घटव्यवहारवत् । सविन्निबन्धन, तदनन्तर जायमानत्वात् घटव्यवहारवत् । संवित् स्वप्रतिबद्धव्यवहाररूपकार्ये स्वसमानजातीयपरानपेक्षा, तथा भूतपरगत-कार्यकारित्वात्, यद्यथाभूत परगतकार्यं करोति, तत् स्वगततथाभूतकार्यजननार्थं तथाभूतपरानपेक्षम्, यथा दीपो दीपान्तरानपेक्ष इति । अत्र अर्थापत्तिरपि प्रमाण प्राभाकरा वदन्ति ।

## (झ) "ज्ञानानां स्वयंप्रकाशतानिष्कर्षः"

ज्ञानाना स्वप्रकाशविषये दार्शनिकेषु मतत्रयमस्ति । सौगताना विज्ञानवा-दिनामेकम्, अद्वैतवादिनामपरम्, चरमञ्च प्राभाकराणाम् । तत्र ज्ञानातिरिक्त बाह्य वस्त्वपलपन् विज्ञानवादी क्षणिक स्वप्रकाश नानेति साधयति । तच्च ज्ञानमनादिना वासनावैचित्र्येणोपप्लवेन ग्राह्यग्राहकाकाररूपेण प्रकाशते । तत्र कर्त्तृकर्मभावविरोधो ज्ञानातिरिक्त स्थल एव पद विधत्ते । अतः स्वविषयत्वरूप स्वप्रकाशत्व तेषा निर्विवादम् ।

अद्वैतवादिनस्तु-ज्ञान द्विविधम्-ब्रह्मण· स्वरूपभूत वृत्तिरूपञ्चेति । वृत्तेः अन्तःकरण परिमाणरूपत्वेन अन्त करणस्य जडत्वात् वृत्तेर्जडत्वम्, स्वरूप-भूतन्तु स्वयम्प्रकाशमेकमुत्पत्तिविनाशरहितमिति वदन्त नामरूपाभ्या व्याकृत-स्यास्य प्रपञ्चस्य सदसद्भ्यान् निर्वक्तुमशक्यत्वेनानिर्वचनीयता सगिरन्ते । एतन्मते—अवेद्यत्वे सति अपरोक्षव्यवहारविषयत्वयोग्यत्व स्वप्रकाशत्वमिति परिस्कुर्वन्ति ।

प्रभाकरास्तु—सर्वदा सविदुत्पद्यमाना विषयात्मनौ प्रकाशयन्त्येव दीपवत्प्रकाशते इति वदन्त सविषयकसवित्स्वप्रकाशता मन्यते । अतस्तन्मते विषयात्मनौ विहाय सवित् कदापि नोत्पद्यते । यदा सवित् प्रकाशते तयार्थात्मनोः प्रकाश । विपयवर्तमानतादशाया सविदः विषयसहभाव । अतीतानागतविषय-सहभाव सविदोऽनुमानेन सिध्यति । एतेन केवल विज्ञाना प्रत्यक्षमिति वदन्तो योगाचाराः निरस्ता भवन्ति । यतो हि सवित्प्रकाशनवेलाया ज्ञानातिरिक्तो विषयात्मनौ सह प्रकाशते । अतः केवलस्य ज्ञानस्य प्रत्यक्षता न घटत इति

प्राभाकराणामाशयः। कौमारिलास्तु विज्ञानवादिमत निरसितुं ज्ञानस्यानुमेयत्वे-नार्थस्यैव प्रत्यक्षत्वमिति पन्थानमाविष्कृतवन्त इति विवेक ।

## (ङ) "जयन्तभट्टमतं तत्परिशीलनं च"

अत्र न्यायमञ्जरीकारः श्री जयन्तभट्ट ज्ञानस्यानुमेयत्वक्रियास्वभावत्व-विषये कौमारिल मत यथायथमनूद्य खण्डयति ।[1] तस्यायमभिप्राय. क्रियास्वभा-वन्तु ज्ञान सर्वथानुपपन्नम् । तच्च फलस्वभावम् । क्रिया स्वभावत्वे तस्य प्रत्यक्षत्वमेव स्यात्, न त्वनुमेयत्वम् । उत्क्षेपणादय' क्रियास्सर्वा अपि प्रत्यक्षाः ज्ञानक्रिया परमप्रत्यक्षमिति विभागो न युक्तिसगत. । कारकाणि च सम्भूय फलनिर्वर्तकानि भवन्ति । कारकाणा कारकभावश्च नातीन्द्रियक्रियायोगनिबन्धनः तथात्वे व्यवहारस्यैव लोपस्स्यात् । न हि लोका। क्रियासम्बद्धत्वेन कारकाण्य-नवगच्छन्त फलार्थं तान्युपाददीरन् । कारकत्वञ्च नातीद्रियम् । यथा सर्वाणि कारकाणि सम्भूयौदन फल निष्पादयन्ति, तथैवात्ममनस्सन्निकर्षादीनि कार-काणि सम्भूय ज्ञान फल निष्पादयन्तु । अतः फलस्वभावमेव[2] ज्ञानम्, न क्रियात्मकमिति ।

परमत्र मीमासका एवाभिप्रयन्ति-सर्वत्र धातुषु 'यजति' 'पचती' त्यादिषु 'यागेन करोति' 'याग करोति' इति धात्वर्थस्य साधनत्वेन साध्यत्वेन च विवरणमनुभू-यते। तत्र करोतिना विक्रियमाणेन व्यापारेण सह धात्वर्थस्य साधनत्वसाध्यत्व-सम्यन्धे विद्यमानेऽपि तद्वाचकतृतीयद्वितीययोरभावस्तु स्पष्ट एव । साधनत्व वा साध्यत्व या कल्पनीयमेव । प्राप्ताप्राप्तविवेकन्यायेन धात्वर्थस्याप्राप्तातादशाया साधनत्वम्, प्राप्ततादशायान्तु साध्यत्वमनुमीयते । फलभाव्यकभावना-स्थले भावार्थाधिकरणन्यायेन धात्वर्थस्य करणत्वमेवेति सिद्धान्तो मीमासका-नाम् । धात्वर्थस्य फलैकरूपत्वे कदापि तस्य करणत्व न सिध्येत् । अतस्तदति-रिक्तमेव फल वाच्यम् । तच्च स्वर्गकामादिपदैर्बोधितमपि कालान्तरभावित्वा-त्तस्य धात्वर्थस्य च यागादे क्षणिकत्वात् 'यजेत स्वर्गकाम' इति वाक्यावबोधि-

---

१. जयन्त भट्ट-न्यायमञ्जरी—पृष्ठ—१८ ।

२. "तस्मात्कारकचक्रेण चलता जन्यते फलम् ।
न पुनश्चलनादन्यो व्यापार उपलभ्यते ।।
चलन्तो देवदत्ताद्यास्तदनन्तरमोदन. ।
एतावद् दृश्यते त्वत्र न त्वन्या काचन क्रिया ।।"

—न्यायमञ्जरी-पृष्ठ—१८

तस्य यागस्वर्गयोस्साध्यसाधनभावस्योपपत्तयेऽर्थापत्तिप्रमाणेन मध्ये पूर्वं कल्प्यते। तच्चापूर्वं साध्यमपि भवति साधनमपि यदा तत्साधनम्, तदा तदेव साधकतमं परिगण्यते। तमपा द्योतितोऽतिशयस्तस्यैवाङ्गीकर्त्तव्यः, न तु कारक—सामग्र्याः। फलनिष्पादनावसरे तदप्यपूर्वं व्यापारदेवेति स्वीकर्त्तव्यम्। स च व्यापारोऽतीन्द्रिय एव।

किञ्च, यागादिनिष्ठं यत्करणत्वं तदप्यपूर्वसाधनत्वेनैवोपपादनीयम्। यागो व्यापारः कामं भवतु प्रत्यक्षः, किन्तु तत्र विद्यमानमपूर्वसाधनत्वमतीन्द्रियमेव-अत एव यागत्वेन यागो न धर्मः, किन्त्वपूर्वसाधनत्वेनैव सो धर्मः। "श्रेयस्साधताह्येषा नित्यं वेदात्प्रतीयते" इति वार्तिककारा वदन्ति। एवञ्चोत्क्षेपणादीनां क्रियाणां प्रत्यक्षत्वेऽपि काश्चन क्रिया अप्रत्यक्षा अपि स्वीकर्त्तव्या एव। किञ्च यागत्वेनापि यागो न प्रत्यक्षः, व्युत्क्रमेणाङ्गवैगुण्येन वाऽनुष्ठिते यागे 'यागस्सम्पन्नः' इति वैदिका न प्रतियन्ति। विधयस्तु समग्रे प्रवर्तन्त इति हि न्यायः। 'दश हस्त परिमितं कूपं तर शतं मुद्रास्तुभ्यं दास्यामि' इति समयमङ्गीकृत्याष्टमे हस्ते पतिताय कूपादुत्थितवते अशीतिरूप्यकाणि मे देहीति च पृच्छते न कोऽपि रूप्यकाणिदद्यात्। तथैवाङ्गविगुणे यागे 'यागस्सम्पन्न' इति बुद्धिर्न भवति। तदत्रास्ति किञ्चिदतीद्रियं वस्तु। 'पचति' इत्यादौ विक्लृत्तिः फलमिति व्यवहारः सर्वप्रसिद्धः। तदपि फलं क्रियास्वभावमेव। यदि च तत्सिद्धस्वभावमभविष्यत् तर्हि सिद्धत्वादेव तस्य कारकापेक्षापि नाभविष्यत्। विक्लृत्तिरूपक्रियामेव खलु निष्पादयितुं कारकाणां भवत्यपेक्षा। विक्लृत्तिरूपा च क्रिया न प्रत्यक्षेण सिध्यति, किन्तु फलेनौदनेन साऽनुमीयते। अत्र स्थालीपुलाकन्यायोऽप्यानुकूल्यमावहति। अङ्गुलिभिः पुलाकं स्पृशन्तो लोका वदन्ति विक्लृत्तिर्न जाता पक्वमोदनञ्चानुभवन्तो जाता विक्लृत्तिरिति। एवञ्चानुमेयाया अपि क्रियायास्सत्वात् ज्ञानस्यापि क्रियास्वाभाव्येऽनुमेयत्वमव्याहतमिति।

## सप्तमः परिच्छेदः

# (क) प्रमाणस्य स्वतस्त्वपरतस्त्वविचारः

मीमांसकेषु प्राभाकराणां मतेन ज्ञानं स्वयम्प्रकाशम्, भाट्टानाञ्च मतेनानुयमेमिति प्रागभिहितम्। उभयेषामप्येवमभिधानम् ज्ञानाकारतां सर्वस्य जगतो वदतां बाह्यार्थानपलपितुं प्रवृत्तानामवैदिकानां मतस्य निरसनफलकमिति च पूर्वं निरूपितम्। ज्ञानमिदमुत्पद्यमानं क्वचित्समयान्तरे बाध्यमानं भ्रान्तिरूपं भवति, क्वचित् यथावद् ग्राह्यं वस्तु गृहीत्वा कालत्रयेऽपि भवत्यबाधितम्। तत्र प्रथममप्रमाणम् द्वितीयञ्च प्रमाणमिति व्यवह्रियते। किंरूपं तत्प्रमाण्यमित्यत्र यथार्थज्ञानत्वम् तद्धर्मावगाहित्वं तदिति न्यायवादिनां वदन्ति। एवमभिधीयमाने यथार्थस्मृतेरपि प्रामाण्यं प्रसज्यते। यथार्थत्वेऽपि स्मृतेः प्रामाण्यव्यवहारो न भवतीति प्रायस्सर्वतन्त्रसिद्धान्तः। अतिप्रसंगमिमं वारयितुं स्मृतिभिन्नत्वे सति यथार्थज्ञानत्वं यथार्थानुभवत्वंवा प्रामाण्यमिति वा प्राभाकराणां समाहितिः। भाट्टास्तु अगृहीतग्राहित्वमबाधितविषयत्वञ्च-प्रामाण्यमिति मन्वते। गृहीतग्राहित्वान्न स्मृतिः प्रमाणम्, बाधितविषयत्वाच्च न भ्रान्तिः प्रमाणमिति च पूर्वमुक्तम्।

अथेदानीं प्रामाण्यं प्रत्युच्चावचं प्रवृत्तानां वादानां स्वरूपविचारः प्राप्तावसरः। तत्रेमा विप्रतिपत्तयो भवन्ति-प्रामाण्यमप्रामाण्यं चैत्युभयं स्वतः। उभयमपि परतः, अप्रामाण्यं स्वतः प्रामाण्यं च परतः, प्रामाण्यं स्वतः अप्रामाण्यञ्च परत इति। क्रमेण सांख्य-नैयायिक-बौद्ध-मीमांस-कानां सम्मताः पक्षाः।[1] तत्र सांख्य-

---

१. "प्रमाणत्वाप्रमाणत्वे स्वतः साख्याः समाश्रिताः
नैयायिकास्ते परतः, सौगताश्चरमं स्वतः—
प्रथमं परतः प्राहुः, प्रामाण्यं वेदवादिनः
प्रमाणत्वं स्वतः प्राहुः, परतश्चाप्रमाणताम्।"
—सर्व दर्शनसंग्रहः पृ० १३१।

नैयायिकयोर्मिथो भूयान् विरोधः, बौद्धमीमांसकयोश्च प्रबलो विरोधः केनाप्यंशेन बौद्धा सांख्यनैयायिकाभिमतं मतमनुसरन्ति, न मीमांसकानाम्। मीमांसकाश्च न बौद्धानाम्।

यद्यपि प्रमाणप्रमेयादिरूपं यथार्थ्येन निरूपयितुं न्यायशास्त्रं प्रवृत्तम्, मीमांसा तु निष्कृष्टं वेदवाक्यार्थमवबोधयितुं प्रवृत्ता, तथापि वेदविषये बौद्ध-मीमांसकयोर्विप्रतिपत्तेस्सत्त्वात् केवलं वेदोत्थज्ञाने प्रामाण्यस्वतस्त्वसाधनं मीमांसकानामनुचितं स्यात् वेदस्योभयवादिसमतत्वाभावादिति ज्ञानसामान्यम-वलम्ब्य प्रामाण्यस्वतस्त्वपरतस्त्वविचारः कर्तव्यस्समापन्नः। यदि प्रमाणान्येव विषयीकृत्य चिन्त्येत तर्हि विषयस्योभयवादिसिद्धत्वाद्यानि उभयोः प्रमाणतया प्रसिद्धानि तेषां प्रामाण्यं स्वतः इति सिद्धान्त्येत। ततश्च वेदस्योभयवादिसिद्ध-प्रामाण्याभावेन विचाराविषयत्वान्नाऽस्य स्वतः प्रामाण्यं साधितं स्यात्। तत्र वेदप्रामाण्यानुयोगिनी चिन्ता काकदन्तपरीक्षावदकर्तव्या स्यात्। ज्ञानमात्रन्त्वधि-कृत्य स्वतः प्रामाण्ये परतश्चाप्रामाण्ये साध्यमाने वेदस्यापि स्वतस्तावद्विषयत-थात्वरूपं प्रामाण्यमवगतं स्यात्, कारणदोषज्ञानादेरभावान्निरपवादं स्थितं भव-तीति प्रयोजनवती चिन्ता। तदिदमभिप्रेत्य प्रामाण्यस्वरूपचिन्ताप्रसंगे प्रथमं भट्टपादाः—

**सर्वविज्ञानविषयमिदं तावत्परीक्ष्यताम्।**
**प्रमाणत्वाप्रमाणत्वे स्वतः किं परतोऽथवा ॥**[1]

इत्यौपोद्घातिकीं कथामवातारयन्। सर्वज्ञानानुबन्धि स्वतः प्रामाण्यमागन्तु-नाऽप्रामाण्येनाऽपोद्यत इति साधिते निरपवादं वेदानां प्रामाण्यं सेत्स्यतीति वार्तिकाभिप्रायः। तदुक्तम्—

**सामान्यानुगता शक्तिर्या काचन निरूपिता।**
**तदन्वितो विशेषोऽपि तद्वाच्यव्यपदेशभाक् ॥**

इति।

## (१) सांख्यमतम्

तत्र सत्कार्यवादिनस्सर्वमेव कार्यजातं सदुत्पद्यत इति मन्यमानाः प्रामाण्या-

---

१. श्लो० वा०—३३—तदिहैव चिन्ता, किं ज्ञानस्य प्रामाण्यमप्रामाण्यं च स्वत एव निर्णीयते किं वोभयमपि कारणगुणदोषादिना निरूपयि-तव्यम्, उताऽप्रामाण्यं स्वतः प्रामाण्यं परतो, विपरीतं वेति—न्यायर-त्नाकर टीका पृ० ५४।

प्रामाण्यमपि द्वयं स्वत एवेत्यास्थिषत। तथाहि यत्र यस्य स्वाभाविक सामर्थ्यं नास्ति न तत्र तस्य सामर्थ्यमन्येन केनापि शक्यते कर्तुम्। यथा तन्तूना पटोत्पादनसामर्थ्यम् स्वाभाविकं, मृदश्च घटोत्पादनसामर्थ्यम्,न तन्तुभिर्घटो निर्मातुं शक्यते, नापि मृदा पटः। एवमुपादाननियमदर्शनाद्घटादेर्मृदादिरेवो-पादानकरणमिति नियमो दृश्यते। सोऽय नियमः आरम्भवादेनुपपन्नस्स्यात्। आरम्भवादिनः[1] कारणे कार्यस्यासत उत्पत्तिमभिलषन्ति। असत्वाविशेषेण सर्वं सर्वस्मादुत्पद्येत। सर्वस्सर्वत्र प्रवर्तेत यस्य वस्तुनोयदुत्पत्तिसामथर्यमस्ति तदन्वयव्यतिरेकाभ्या निश्चित्य यो यदर्थी स तदुपादत्त इति सर्वलोकसिद्धोऽय पन्थाः। अतो घटादिर्विकारस्तदुपादानेस्ती त्यङ्गीकर्त्तव्यम्। आरम्भवादिनो ब्रयुः-यदुपादाने विकारः कार्यं नास्ति किन्तु विकारोत्पत्तिशक्तिरस्तीति। तर्हि वचनभङ्ग्यां केवलं भेद. नार्थविशेषे कश्चन भेदः स्यात्।

किञ्च-उपादान-निमित्ता-समवायिभ्यस्त्रिभ्य कारणेभ्यः कार्यमुत्पद्यते त्रिष्वपि कारणेषु तत्कार्य नास्ति, असदेवोत्पन्नं तत् इत्यारम्भवादिप्रा वदन्ति। तत्रास्य कार्यस्येदमुपादानम् इद नेति निर्णये किमपि तैर्निर्णायिक वक्तव्यम्। त्रिष्वपि कारणेषु शक्तिभेदमङ्गीकृत्य दण्डो घटस्य निमित्तकारणम् मृदवयव-संयोगस्तस्याऽसमवायिकारणम्, मृच्चोपादानकारणमिति व्यवस्थापनीयम्। स च शक्तिभेदः उपादानाद्यतिरिच्यते उत न ? इति सशये न तावत्तस्योपा-दानाद्व्यतिरेकः, भेदस्य निर्वक्तुमशक्यत्वात् अव्यतिरेके तु-अविशेषात्सर्वोपादान-त्वपातः। अतश्चोपादाने विकाराः शक्त्यात्मना वर्तन्त इति वक्तव्यम्। परि-णामकादिनोऽपि-उपादानेषु विकारान् अव्यक्तानेवाभ्युपयन्ति। तस्मादुभयोर्न विशेषः कश्चित्। उपादानेषु विद्यमाना एव विकारा तैस्तै. कारकव्यापारैर-भिव्यज्यन्ते, यथाऽन्धकारे विद्यमानो घटो दीपेनाभिव्यज्यते। अभिव्यक्तिश्च द्वेधा भवतिस्थूलाकारस्य वस्तुनोबोधाय यत्प्रतिबन्धक तन्निवृत्तिद्व-राऽभिव्यक्तिः, यथाऽन्धकारस्यबोधप्रतिबन्धकीभूतस्य निवारणद्वारा घटस्याभिव्यक्तिः एवं सूक्ष्माकारस्य वस्तुनः आकारप्रतिबन्धकनिराकरणेनाभिव्यक्तिः, यथा मृदि घटाकारः पूर्वाकारेण प्रतिबद्ध तस्य निवारणेन घटस्याभिव्यक्ति रिति। एव ज्ञानस्य प्रमाण्यमप्रामाण्यञ्च स्वत एव। यत्र यस्य स्वाभाविक सामर्थ्य नास्ति न तत्र तस्य सामर्थ्यमन्येन कर्तुं शक्यमिति परिणामवादिनः।

---

१. आरम्भवादः परिणामवादो विवर्तवाद इति वादत्रयम्। अत्रैव सर्वेषां दार्शनिकमतानामन्तर्भाव। तत्र परिणामवादस्साख्यानाम्, विवर्तवाद-श्चाद्वैतिनाम्, अन्ये प्रायो दार्शनिका आरम्भवादिनः।

मतमिद स्वतस्तावद् द्वय नास्ति विरोधात्[1] इति वार्त्तिककारैर्निराकृतम्। एकस्या ज्ञानव्यक्तौ न प्रमाण्यमप्रामाण्यञ्चैतद् द्वय सम्भवति, भावाभावयोर्विरोधात्। प्रमाण्याप्रामाण्ये हि परस्पराभावस्थितिलक्षणेन विरोधेन विरूध्येते, अतः कथमेकव्यक्तिनिवेशिनी भवेताम् ? यो यदुत्पादनशक्तिमान् स तदुत्पादयतीति नियममाश्रित्योपादानस्य व्यवस्था भवितुमर्हति। न हि सर्व सर्वोत्पादनशक्तिमद् भवति। मृद् घटोत्पादे न शक्ता, तन्तुश्च पटोत्पादने शक्तः। यो यत्कार्य सम्पादयितु कामयते स. तदेवोपादत्ते यत्तदुत्पादशक्तिमत्। एतावता न मतद्वयस्यैकरूपतापरिणामवादिनो मते उपादाने विकारसत्तामनुपलब्धिरूपं प्रमाण बाधते, आरम्भ-वादिनस्तु मते उपादाने विकारजननशक्तिमर्थापत्तिस्साधयति। शक्तेरर्थापत्तिगम्यत्व पूर्वमवोचाम।

शक्तिभेदेनैव निमित्तासमवायिसमवायिकारणाना भेदव्यवस्था सिद्धश्यति। किञ्चिदेव तथा शक्त भवति यथा च विकारभावमनुभवति। किञ्चिच्च बहिरेवसत्तदुत्पत्तौ व्याप्रियते। सोऽय शक्तिभेदः कार्यदर्शनसमधिगम्य एव। अतो नाप्रमाणकः। एवञ्च यथाकारण कार्यसाधनाय व्यापृत भवति, तथैव कारणशक्तिरपि कार्यमनुधावति इति प्रमाणबलादभ्युपगन्तव्यम्। सत्कार्यवादिना मत कारकव्यापाराणामानर्थक्यन्तु दुष्परिहरमेव। प्रकृते च विरोधात् कथ ह्येकज्ञानजात्यनुबन्धिनी प्रमाणत्वाप्रमाणत्वे भविष्यतः, विरूद्धधर्मावेशस्य भेदनिबन्धनत्वात्। अतो यथा नैकस्याग्नेः शीतोष्णत्वम् एवं न ज्ञानस्य प्रमाणाप्रमाणस्वभावत्वम्। विरोधमिम परिहर्त्तु प्रमाण्यमप्रामाण्यञ्च भिन्नव्यक्त्याश्रयमिति यदि स्वीक्रियेत भिन्नव्यक्तिनिष्ठनीलपीतवत् तथापि का ज्ञानव्यक्ति. प्रमाण्यमवबोधयति का न नेति निरूपणे दृढतरहेतोरभावाद्व्यवहारोच्छेदो दुरुद्धर एव। न हि तयोर्व्यक्त्योर्ज्ञानत्वातिरिक्तमन्योन्यव्यावृत्त किञ्चिद्रूपमस्ति येनेदृश ज्ञान प्रमाणम्, ईदृशञ्चाप्रमाणमिति निर्णीयेत। ईदृशचिह्नाङ्गीकारे च तादृशचिह्नाधीननिरूपणत्वात्प्रामाण्याप्रमाण्ययोस्स्वतस्त्व भज्येत। ज्ञानत्वस्य च प्रामाण्याप्रामाण्ययोर्व्यवस्थापकत्व प्रमाणाप्रमाणसाधारण्येनैव निराकरणीयमिति यस्यामेव ज्ञानव्यक्तौ प्रामाण्य तामेवाप्रामा-

---

१. श्लो० वा० ३.३५।

प्रामाण्याऽप्रामाण्यशक्ती हि मिथो विरुद्धे, ते कथमेकस्मिन् ज्ञाने स्वाभामिक्यौ स्याताम्। एव हि ज्ञानोत्पत्तिवेलायामेव प्रामाण्यमप्रामाण्य च निर्णेतव्यं स्यात्तच्चाशक्य, तन्न तावद् द्वय स्वत इति-न्यायरत्नाकरटीका—पृ० ५५।

ण्यमपि निर्बाधमनुधावत् केन प्रतिविधीयेत । किञ्च ज्ञानव्यक्तिभेदेऽपि परस्पर-व्यावर्त्तक चिह्नानाश्रयणान्नियामकाभावेन प्रामाण्यसकरोऽपि स्यात् इति ।

## (२) नैयायिकमतम्

नैयायिका उभय परत इत्यभ्युपयन्ति । ज्ञाननिष्ठ प्रामाण्यमप्रामाण्यं वा परत एवावधार्यते न स्वत. । कारणगुणप्रयोज्य यथार्थत्वरूप प्रामाण्यम् कारणदोषप्रभवञ्चाप्रामाण्यम् । ज्ञानग्राहकाणीन्द्रियादीनि यदि गुणयुक्तानि र्ताह तद्ग्राह्यये ज्ञाने प्रमाण्यम्, यदि च तानि दोषरूषितानि र्ताह ज्ञानेऽप्रामाण्यम् । सर्व खलु कार्यजात कारणाधीनात्मलाभ दृश्यते, कारणगुणदोषाभ्याञ्च शुद्धममुद्धञ्च भवति । तद्यावदिन्द्रियादिज्ञानवशादुत्पन्नौ गुणदोषौ न ज्ञानस्यावधार्येते तावत्प्रामाण्याप्रामाण्ययोरपि निश्चयो दे जायते । व्यवहारस्तु निश्चितयोरेव भवति । तदर्थमेव प्रमाणान्यनुस्रियन्ते । अत· कारणोत्पन्नगुणदोषावधारणादेव प्रामाण्यमप्रामाण्यञ्च भवितुमर्हति । एषा रीति· प्रत्यक्षादिप्रमाणानाम् एव शब्दस्यापि रीतिरनुसरणीया । शब्दस्य हि वृद्धव्यवहारद्वाराऽधिगतसम्गन्धोपकृतस्य सत प्रतीतिजनकत्व नाम लोके रूपमवघृतम् । तच्च रूप द्विविध भवति—नैसर्गिकशक्त्यात्मकसम्बन्धमहिम्ना, पुरूषघटितसमयसम्बन्धबलेन वेति । प्रथम रूप मीमासकै· स्वीकृतम्, द्वितीयन्तु नैयायिकै· । प्रकाशमानो दीपः शुचिमशुचिं वा सन्निहितमर्थं यथाऽवद्योतयति, तथा शब्दोऽपि पुरूषेण प्रयुज्यमानः श्रवणपथमवतरन् सत्योऽनृतो वा, समन्वितेऽसमन्विते वा सफन्ने निष्फले वाऽर्थे प्रमितिमुपजनयति इति तावत्सिद्धमिद शब्दस्य रूपम् । इयान् विशेष·—शब्दस्यसम्बन्धव्युत्पत्तिमपेक्षमणः प्रमामुत्पादयपस्ति दीपस्तु तन्निरपेक्ष इति । शब्दजनिताया प्रमिते यथार्थेतरत्व पुरूषाधीनम्, सम्यग्दर्शिनि शुद्धे पुरूषे सति सत्यार्था प्रमितिर्भवति, अन्यथा तु तद्विपरीता । नैयायिकास्तु शब्दस्य नैसर्गिकमर्थसस्पर्शित्व यथा नाङ्गीकुर्व्वन्ति, तथा स्वाभाविक सत्यार्थत्वमपि । एवमभ्युपगम्याने नद्यास्तीरे पञ्च फलानि सन्ति इति विप्रलम्भकवचसि विसंवाददर्शन नोपपद्येत । तस्मात्पुरूषगुणदोषाधीनावैव शाब्द्या प्रमितौ सवादविसवादौ । शब्दे च न गुणा दोषा वा स्वतस्सिद्धाः, किन्तु पुरूषसम्बन्धिनोगुणा दोषाश्च शब्दस्य भवन्ति । पुरूषनिष्ठा गुणा शाब्दज्ञानस्य प्रामाण्यमवस्थापयन्ति दोषाश्चाप्रामाण्यम् । यदि पुरूषगुणाना प्रामाण्यकारणता नेष्यते, र्ताह दोषाणामपि विप्लवहेतुता मा भूदिति पर्यनुयोगे किमुत्तर स्यात् ?

गुणाना दोषप्रशमने चरितार्थतया प्रामाण्यहेतवो गुणा न भवन्तीति मीमासकाना स्यादाशयः; किन्तु बाधानुत्पत्तिमात्रेण वैदिक्या प्रतीते. प्रमाण्य न

भवितुमर्हति ।[1] एवञ्च वेदस्य पुरुषः कर्त्ता कश्चन स्वीकर्त्तव्यः, यश्च त्रैलोक्य-निर्माणनिपुणः । अतएवोक्तं व्यासेन जन्माद्यस्य यतः । (ब्रह्मसूत्र-१-१-शास्त्रयोनित्वात् । (१-१-३) इति । तथा सति प्रामाण्यकारणीभूता गुणास्सुलभा इति परतः प्रामाण्यमेव ज्ञानानां वेदस्य चेति सिद्धम् ।

अस्मिन् मते ज्ञानस्य निस्स्वभावत्वप्रसक्तिः । इन्द्रियसन्निकर्षादिना समुत्पन्न ज्ञान गुणदोषावधारणात्पूर्वमर्थमवगाहते चेत्प्रामाण्यं स्वत एव प्रसिध्येत् । नावगाहते चेत्तर्ह्य प्रामाण्यमेव स्वत. स्यात् । उभयोश्च प्रामाण्याप्रामाण्ययोर्गुणदोषपराधीनत्वाभ्युपगमे गुणदोषावधारणात्प्राग् ज्ञानमनवधारित-प्रामाण्याप्रमाण्यतया इतरव्यावृत्तरूपेणार्थानवगाहित्वादनवधारणात्मक निःस्व-भावमेव प्रसज्येत । न च तद्युक्तम् । न हि सम्भवति ज्ञान नावधारयत्यर्थ न चावधारयतीति । तदिद भट्टपादैं साङ्ख्यतार्किकमतखण्डनप्रसगेऽभिहितम्—

स्वतस्तावद्द्वयं नास्ति विरोधात्परतो न च ।
निःस्वभावत्वमेवं हि ज्ञानरूपे प्रसज्यते ॥

कथं ह्यन्यानपेक्षस्य विपरीतात्मसंभवः ।
किमात्मकं भवेत्तच्च स्वभावद्वयवर्जितम् ॥

विज्ञानव्यक्तिभेदेन भवेच्चेदविरुद्धता ।
तथाप्यन्यानपक्षत्वे किं क्वेति न निरूपप्यते ॥[2]

इत्यादि

किञ्च, परतः प्रामाण्यवादिनां मते वेदाना प्रामाण्यं सुस्थिर न सिध्येत् । ते हि वेदाना पौरूषेयत्व साधयन्ति । तथासति भ्रान्तेः पुरुषधर्मतायाः सर्वानुभवसिद्धतया दोषप्रयोज्यमप्रामाण्यमेव वेदजन्यबोधस्य स्यात् । सकलदोप-विनिर्मुक्तो नित्यसर्वविषयकयथार्थप्रत्यक्षचिकीर्षाकृतिमान् सर्वशक्तिसम्पन्नः पुरूषधौरेय· कश्चन सर्वज्ञ वेदाना कर्तृत्वेन यदीष्यते तर्हि वेदेषु कथमप्रामाण्य शङ्कितुमपि शक्यम् ? इति चेत्तादृशस्य पुरूषस्यासिद्धि । न हीदृश. पुरुषः प्रत्यक्ष इदानीम्, नाप्यासीदित्यनुमातु शक्यम्, साध्यहेत्वोरभावात् । प्रत्युत-

---

१. 'साक्षाद्द्रष्टृनरोक्तत्व शब्दे यावन्न निश्चितम् ।
बाधानुत्पत्तिमात्रेण न तावत्तत्प्रमाणता ।'
इति जयन्तभट्ट ।

—न्यायमञ्जरी पृष्ठ—१७४ ।

२. श्लोकवार्त्तिकम् ३५-३७ पृष्ठ—५५ ।

अतीतः कालः सर्वज्ञशून्यः कालत्वात् एतत्कालवत् इत्यनुमानेन तदभावस्यैव साधनस्य शक्यत्वात् । नापि स आगमगम्यः, सर्वज्ञे हि तदीयस्यागमस्य प्रामाण्य, तत्प्रामाण्ये च तादृशपुरुषसिद्धिरित्यन्योन्याश्रयात् । न च पूर्वपूर्व-पुरुषान्तरप्रणीतागमान्तरेण स पुरुषो निर्णेतु शक्यः, तस्य शुद्धमूलान्तरासम्भ-वेन सर्वज्ञप्रामाण्यासम्भवात् । न च नित्यानुमेयता तस्य, तथा सति तस्यैव वेदस्य नित्यत्वाङ्गीकारे बाधकाभावेन पौरुषेयत्वपक्षस्यैवापक्षयापतेः । कथमपि यदि सर्वज्ञः स्वीक्रियते, त को नामासर्वज्ञो जानीयात् ? यदि सर्वज्ञ एव जाना-तीत्युच्यते तर्हि न क्वचित् अवस्थान स्यात् । एवञ्च तत्सार्वज्ञ्यस्य दुरवधारण-त्वात्तद्वाक्यत्वेनाभ्युपगम्यमाने वेदे प्रामाण्यावधारण दुर्घटमेवेत्यप्रामाण्यमेव वेदानां स्यात् । तदिदमुक्त भट्टपादैः—

**सर्वज्ञो दृश्यते तावन्नेदानीमस्मदादिभिः ।**
**निराकरणवच्छक्या न चासीदिति कल्पना ॥१७॥**
**न चागमेन सर्वज्ञस्तदीयान्योन्यसंश्रयात् ।**
**नरान्तरप्रणीतस्य प्रामाण्यं गम्यते कथम् ॥१८॥**
**न चाप्येवपरो नित्यः शक्योलब्धुमिहागमः ।**
...................................११९½
...................................

**सर्वज्ञोऽसाविति ह्येव तत्काले तु बुभुत्सुभिः ।**
**तज्ज्ञानज्ञेयविज्ञानरहितैर्गम्यते कथम् ॥१३४॥**
**कल्पनीयाश्च सर्वज्ञा भवेयुर्बहवस्तव ।**
**य एव स्यादसर्वज्ञः स सर्वज्ञं न बुध्यते ॥१३५॥**[1]

यदि परतः प्रामाण्यवादिनो वेदानामपौरुषेयत्वमिच्छेयुः, तथापि गुणज्ञाना-भावादेवाप्रामाण्य वेदानामापतेत् । वेदानाञ्च नित्यनिर्दोषतायाः पूर्वसाधित-त्वात् तादृशपुरुषधौरेयाङ्गीकारेऽपि गगनादेरिव तेन वेदस्याप्रणयनेऽपि न तत्प्रामाण्ये काचित्क्षतिः ।

## (३) सौगतमतम्

सौगताः प्रामाण्यं परतः अप्रामाण्यञ्च स्वत इत्याशेरते । तेषामयमाशयः— अप्रामाण्यं नाम प्रामाण्यत्वाभावः । अभावश्चावस्तुत्वान्न केनचिज्जन्येत किमुत दोषैः ? अतो न तदवधारणेनावधारयितुं शक्यमित्यप्रामाण्य स्वत एव । प्रामाण्यन्तु वस्तुत्वेन गुणजन्यत्वात् गुणावधारणात्मलाभ भवति । किञ्च घटज्ञानं

१. श्लो० वा० चोदनासूत्रम् ।

क्वचित् घटात् जायते क्वचिच्चाघटादपि । एवं सति न ज्ञानमात्रेण तस्य प्रामाण्य निश्चेतु शक्यते । अतोऽवश्यं गुण-सवादा-र्थक्रियास्वन्यतमस्य ज्ञानेनैव तस्य यथार्थतारूप प्रामाण्य निर्णेयमिति प्रामाण्यं परत एव न स्वतः । स्वतस्त्वे प्रामाण्यस्य स्वाप्निकज्ञानानामपि प्रामाण्यं प्रसज्येत, भवन्मते प्रामाण्यस्यौत्सर्गिकत्वात् । ननु सर्व सापवाद भवत्यौत्सर्गिकम् । स्वतः प्राप्तमपि प्रामाण्य दोषज्ञानेनाऽपोद्यत इति चेन्न, अप्रामाण्यस्य दोषाधीनत्वाभावात् । अभावस्याऽवस्तुत्वान्न तस्य दोषजन्यत्व भवितुमर्हतीत्युक्तम् । ज्ञानाना सर्वेषामप्रामाण्य स्वाभाविकमेवेति कुतस्तत्र कारणापेक्षा ? अपवादकन्तु तस्य प्रामाण्यम् । तच्च कारणसापेक्षम् । स्वप्नादिविज्ञानेषु कारणाभावादेव प्रामाण्य नोपजायते । ततश्च स्वाभाविकमप्रामाण्यमपोदित तिष्ठति स्वतएव । प्रामाण्यकारणकोटौ गुणाना सन्निवेश क्रियते । ज्ञानकारणीभूतानीन्द्रियादीन्यधिनिष्टन्तस्सन्निकर्षादयो गुणा प्रामाण्यमुपजनयन्ति । स्वप्नज्ञाने च तदभावात् न प्रामाण्यं तस्य । प्रामाण्यकारणीभूताना गुणानामभावो द्वेधा भवति-क्वचिदिन्द्रियादिषु सत्स्वपि तद्वृत्तिभिर्दोषैर्गुणानामपसारणम् । यथा—शुक्तिकारजतस्थले । क्वचिच्च ज्ञानकारणानामिन्द्रियलिङ्गादीनामाश्रयाभावात् ।

ननु यद्यप्रामाण्य न दोषप्रयुक्त तर्हि कथं दोषेषु ज्ञायमानेषु तज्ज्ञायत इति चेन्न, दोषैर्हि निराक्रियन्ते गुणाः, ततश्च कारणाभावेन प्रामाण्योपजननाभावादनपोदितमेवाप्रामाण्य स्वप्नादिविज्ञानेषु व्यवतिष्ठत इत्यप्रामाण्यावस्थितिप्रयोजको योऽपवादाभावः तस्य प्रयोजको यो गुणाभावस्तत्प्रयोजकत्वादेवान्यथासिद्धेष्वपि दोषेष्वप्रामाण्यकारणत्वभ्रमो मीमासकानाम् । वस्तुतस्त्वौत्सर्गिकमेवाप्रामाण्यमसामान्ये दोषाणामन्वयव्यतिरेकौ, अज्ञानलक्षणाप्रामाण्ये व्यभिचारात्, तस्य ज्ञानकारणाभावमात्रप्रयोज्यत्वादिति । तदिदं सर्वमुक्त वार्तिककारैः—

तस्मात्स्वाभाविकं तेषामप्रमाणत्वमिष्यताम् ।
प्रामाण्यञ्च परापेक्षमत्र न्यायोऽभिधीयते ।।
अप्रामाण्यमवस्तुत्वान्न स्यात्कारणदोषतः ।
वस्तुत्वात्तु गुणैस्तेषां प्रामाण्यमुपजन्यते ।।
प्रामाण्यं हि यदोत्सर्गात्तदभावोऽथ कृत्रिमः ।
तदा स्वप्नादिबोधेऽपि प्रामाण्यं केन वार्यते ।।
मत्पक्षे कारणाभावात्प्रामाण्यं नोपजायते ।
हेतुमत्त्वप्रसंगोऽतो न भविष्यत्यवस्तुनः ।।
इन्द्रियादिगुणाश्चास्य कारणं तदसद्द्विधा ।
दुष्टत्वादिन्द्रियादीनामभावेऽन्यतरस्य वा ।।

**अतएव वचोऽभ्रान्तिदोषैर्मिथ्यात्वधीरिति ।**
**तद् व्याप्तेस्तु गुणाभावस्तत्कृता ह्यप्रमाणता ॥**
**तस्मात्कारणशुद्धत्वं ज्ञातप्रामाण्यकारणम् ।**
**स्वभावतोऽप्रमाणत्वं तदभावेन लक्ष्यते ॥**
**अन्वयव्यतिरेकाभ्यामप्रामाण्यं न दोषतः ।**
**नाऽज्ञाने दृश्यते ह्येतत्कारणाभावहेतुके ॥**[1]

तथा च स्वप्नादिज्ञानानामिव वेदजबोधस्याप्यप्रामाण्यमौत्सर्गिकम्, प्रामाण्येन तदपवादस्य तु शङ्कापि नात्रावतरीतुमीष्टे। मीमासकमते वेदस्यापौरुषेयत्वेन तज्जन्यज्ञानस्य चागृहीतग्राहित्वेन कारणगुणसवादार्थक्रिया ज्ञानाना प्रामाण्यग्रहकारणाना तत्रानवतारात्, पौरुषेयत्वेऽपि च पुरुषाणा भ्रान्त्यादिदोषदूपिततया गुणानामभावात्प्रामाण्योपजननाभावाच्च वेदस्याप्रामाण्य दुष्परिहरमेवेति ।

## (४) मीमांसकमतम्

भट्टपादा. मीमांसकमतोपक्रमे पद्यद्वयमाहु· ।

**स्वतः सर्वप्रमाणानां प्रामाण्यमिति गम्यताम् ।**
**न हि स्वतोऽसती शक्ति· कर्त्तुमन्येन शक्यते ॥**
**आत्मलाभे च भावानां कारणापेक्षता भवेत् ।**
**लब्धात्मनां स्वकार्येषु प्रवृत्तिः स्वयमेव तु ॥**[2]

पद्ययोरनयोरयमाशय.—यदि ज्ञानस्य स्वविषयतथात्वावधारणे स्वतः शक्तिर्नस्यात्तदाऽसौ नाऽन्येनापि शक्यते सम्पादयितुम्। अतो न कदाचित्केनचित्कश्चिदप्यर्थोऽपधार्येतेत्यान्ध्यमेवाशेपस्य जगतः प्रसज्येत। कुतश्चास्य परतस्सिद्धिः ? गुणावधारणादिति चेत्, के पुनस्ते गुणाः ? न हि चक्षुरादिषु गुणा नाम केचिदुपलभ्यन्ते। वैमल्यादिक तु दोषाभावमात्रं, न गुण· । सोऽपि तथा चेत्-वेदस्यापि तत्सम्भवादाद्गुणाधीनेऽपि वेदप्रामाण्ये नास्माक काचित्क्षति । कथञ्च गुणात्तत्सिद्धिः ? गुणनिमित्त विज्ञानस्य यथार्थविषयत्वम्। अतः कारणभूतगुणावगमेन विषयस्यार्थस्य तथात्वमवगम्यते। विषयतथात्वमेव च ज्ञानस्य प्रामाण्यम् । तर्ह्यस्य गुणावगम्यत्वमपीति चेत्-स्यादेव, यदि गुणनिमित्त यथार्थत्वं स्यात्, न तु तदस्ति। यदि हि तन्निमित्त तत् स्यात् ततो-

---

१ श्लोकवार्त्तिकम्—चोदनासूत्रम् श्लोक ३८-४५ ।
२. श्लोकवार्त्तिकम्-चोदनासूत्रम् श्लोक ४७-४८ पृष्ठ-६० ।

गुणरहितात् दोषयुक्ताच्च चक्षुरादेरुपजाते पीतशङ्खादिज्ञाने न किञ्चित्सत्य गम्येत, गम्यते हि तत्रापि शङ्खादिक सत्यम् । अत स्वकारणनिमित्तमेव ज्ञानस्य यथार्थत्वम्, तद्दोषनिमित्तत्वञ्चायथार्थत्वम् । तथा सति पीतशङ्खादिज्ञानस्य स्वकारणतः सत्यविषयत्वम् तद्दोषतश्चासत्यविषयत्व युक्त भविष्यति । अस्तु वा प्रमाणभूतस्य ज्ञानस्वरूपस्य गुणवत्कारणजन्यत्वम् तथापि विषयावधारणस्य ज्ञानकार्यस्य प्रामाण्यपर्यवसितस्य न जातु ज्ञानप्रयोजकापेक्षत्व शक्यमास्थातुम्, तथा क्वचिदप्यदर्शनात् । सर्वे हि भावाः स्वात्मलाभायैव स्वकारणमपेक्षन्ते । घटो यथा मृत्पिण्डादिक स्वजन्मन्येवापेक्षते, नोदकाहरणेऽपि । तथा ज्ञानमपि स्वोत्पत्तौ गुणवदितरद्वा कारणमपेक्षताम्, स्वकार्ये तु विषयनिश्चयेऽनपेक्षमेवेति ।

किञ्च, प्रामाण्यस्य परतस्त्वासम्भवात्स्वतस्त्वमन्यगत्यैव स्वीकरणीयम् । यद्युत्पजातमपि ज्ञान स्वविषयावधारणाय स्वकारणगतगुणावधारणमपेक्षते ततो गुणावधारणाय प्रमाणान्तराज्ज्ञानोत्पादः प्रतीक्षितव्यः । न ह्यपरिच्छिन्नोगुणः प्रामाण्य गमयति, असत्समत्वात् । तदपि ज्ञान विषयज्ञानवदेव स्वविषयावधारणाय स्वकारणगुणावधारक ज्ञानान्तरमपेक्षते, तदपि तथैति जन्मसहस्रेणापि न कश्चिदर्थोऽवधार्येतेति, प्रामाण्यमेव सर्वत्रोच्छिद्येत । अतः प्रामाण्य स्वतएवाङ्गीकरणीयम् ।

प्रामाण्यस्य स्वतस्त्वेऽप्यनवस्थाकृता दुरवस्था तदवस्थैवेति परैराक्षिप्यते-प्रामाण्यग्रहण प्रामाण्यस्य ग्रहणे तदपवादकदोषाभावग्रहणान्तरस्येत्यादिरीत्या पूर्वमापादितस्य गुणग्रहणावधारणपरम्परानुसरणन्यायस्य दोषाभावग्रहणेऽपि समानत्वादिति, तदत्रोच्यते स्यादेव यद्यपवादाभावाय दोषाभावो ग्रहीतव्यः । न त्वेवम्, ज्ञायमाना हि दोषा. प्रामाण्य विघ्नन्ति, तदपवादक मिथ्यात्व निवर्तते । तदज्ञानञ्चायत्नसिद्धमिति न काचिदनवस्था । तस्माद्बलादायातं बोधत्वेनैव बुद्धेः प्रामाण्यम्, औष्ण्यमिव वह्नेः, शैत्यमिव जलस्य । तच्च ज्ञानविषयभूतेष्वर्थेष्वन्यथात्वस्य ज्ञानकारणभूतेष्विन्द्रियादिषु दोषस्य वा ज्ञानाज्ज्ञातेनाप्रामाण्येन "नैवमयमर्थः" इत्यपोद्यत इति परत एवाप्रामाण्यम् । तदुक्तं वार्तिके—

> **जातेऽपि यदि विज्ञाने तवान्यार्थोऽवधार्यते ।**
> **यावत्कारणशुद्धत्वं न प्रमाणान्तराद्भवेत् ॥**
> **तत्र ज्ञानान्तरोत्पादः प्रतीक्ष्यः कारणान्तरात् ।**
> **यावद्धि न परिच्छिन्ना शुद्धिस्तावदसत्समा ॥**
> **तस्यापि कारणे शुद्धे तज्ज्ञाने स्यात्प्रमाणता ।**
> **तस्याप्येवमितीच्छंश्च न क्वचिद्व्यवतिष्ठते ॥**

**यदा स्वतः प्रमाणत्वं तदाऽन्येनैव गृह्यते ।**
**निवर्त्तते हि मिथ्यात्व दोषाज्ञानादयत्नतः ॥**
**तस्माद्बोधात्मकत्वेन प्राप्ता बुद्धेः प्रमाणता ।**
**अर्थान्यथात्वहेतूत्थदोषज्ञानादपोद्यते ॥**[1]

यदुक्तमप्रामाण्यस्याभावरूपस्यावस्तुत्वाद्दोषजन्यत्वासम्भव इति, तन्न; ज्ञानाजनकत्वलक्षणस्य शब्दगतस्याप्रामाण्यस्याभावरूपतया तन्मतानुसारेणावस्तुत्वेऽपि संशयविपर्ययगतयोर्वस्तुभूतयोर्दोषान्वयव्यतिरेकानुविधायिनोर्दोषजन्यत्वे बाधकाभावात् । अतो दुष्टकारणजन्येन ज्ञानेनात्मन प्रामाण्यं विषयस्यार्थस्यातथाभूतस्यापि तथात्वरूपमवगतमपि अर्थान्यथात्वदर्शनेन दोषज्ञानेनैवाऽपोद्यते । यत्तु-अज्ञानरूपमप्रामाण्य[2] तत्रास्मन्मतेऽपि दोषाणा व्यापारो नैवास्ति, सौगतानामिवाऽस्माकमपि ज्ञानकारणाभावादेव तस्य सिद्धत्वात् ।

ननु परतः प्रामाण्यवादिना मते याऽनवस्था पूर्वमापादिता सा परतोऽप्रामाण्यपक्षेऽपि कुतो न भवेत् ? पराधीनत्वाम्यापादकस्योभयत्र सत्वादिति चेन्न, पराधीनत्वमात्रेणानवस्था न भवति, किन्तु स्वसजातीयापेक्षसजातीयपरम्परानुसरणेन, ततश्च यदि प्रामाण्यस्य प्रामाणान्तराधीनत्वमिवाप्रामाण्यस्याप्रमाणान्तराधीनत्वं स्यात् तदा स्यादेवाऽनवस्था । अत्र त्वप्रामाण्यमर्थान्यथात्वस्य दोषस्य वा ज्ञानं प्रमाणभूतमेवापेक्षते नाप्रमाणम् । किञ्च पूर्वज्ञानस्य बाध विनोत्पत्तिमेवाऽनासादयता तदुत्तरविशेषदर्शनेन स्वोत्पत्त्यवस्थायामेवाऽर्थान्यथात्वरूपमप्रामाण्यं गृह्यते । एवञ्च नेद रजतम् इत्याद्याकारेण विशेपदर्शनेन स्वीयस्वतः प्रामाण्यावधीरितप्रमाणान्तरापेक्षेण शीघ्रतरमेवार्थान्यथात्वरूपमप्रामाण्य गृह्यत- इति नात्राऽनवस्था । सोयमनवस्थादोषपरिहार —

**दोषतश्चाप्रमाणत्वे स्वतः प्रामाण्यवादिनाम् ।**
**गुणज्ञानानवस्थावन्न दोषेषु प्रसज्यते ॥**
**साक्षाद्विपर्ययज्ञानात्साध्वेव त्वप्रमाणता ।**
**पूर्वाबाधेन नोत्पत्तिरुत्तरस्येह सिध्यति ॥**[3]

---

१. श्लोकवार्त्तिकम्, चोदनासूत्रम् श्लोक ४९-५३, पृष्ठ-६०-६१

२. अप्रामाण्यं त्रिधा भिन्न मिथ्यात्वाऽज्ञानसशयैः ।
वस्तुत्वाद् द्विविधस्यात्र सभवो दुष्टकारणात् ॥५४॥
अविज्ञाने तु दोषाणा व्यापारो नैव कल्पते ।
कारणाभावतस्त्वेव तत्सिद्ध नस्त्वदुक्तिवत् ॥५५॥
—श्लो० वा० २.५४—५५ पृ० ६१-६२

३. श्लोकवार्त्तिकम्, चोदनासूत्रम्-श्लोक, ५६-५७ पृष्ठ-६१-१

इत्यादिभिः वार्त्तिकैः भट्टपादैः कृत. ।

ननु किमिद परेणैव पूर्वस्य बाध इति ? मिथोविरोधिविषयकताया उभयो-रप्यविशिष्टत्वेन पूर्वेणैव परबाधा किमिति न क्रियते ? विनिगमनाविरहप्रापि-तस्य परस्परबाधवैशसस्य परिहाराय यद्येकतरज्ञानसहायतया तत्सवादक तदन्य-ज्ञानस्य बाधक तत्कारणदोषावगाहि वा ज्ञानान्तरमपेक्ष्यते तदा द्वितीयज्ञानेऽपि सहायतया तथाभूत ज्ञानान्तरमवश्यमपेक्ष्येत, विनिगमनाविरहात् । एवञ्च सहायज्ञानधीरपि मिथो बाधवैशसे भूयोऽपिसहायान्तरान्वेषणमित्यप्रामाण्यपरत-स्त्वेऽनवस्था जागर्त्यैवेति चेन्न,—

पूर्वेण परस्य बाधः कथमिव स्यात् ? परस्य तदानीमनुत्पन्नत्वात् । बाध्य-बाधकाभावस्तु लब्धस्वरूपयो. प्रबलदुर्बलभावापन्नयोर्द्वयोर्भवति । न चाऽनुत्पाद-एव तस्य प्रतिबन्धो वक्तु शक्य, कारणाभावत एव तस्य प्राप्तत्वात् । एव परेणापि न पूर्वस्योत्पत्ति. प्रतिबध्यते, तस्य पूर्वमेवोत्पन्नत्वात् । नापि परस्य पूर्वजातीय ज्ञानान्तरोत्पत्तिप्रतिबन्धकत्वमेव पूर्वबाधकत्वम्, द्वितीयस्य प्रमात्वे पूर्वस्य भ्रमत्वनियमेन तज्जनकदोषाभावादेव द्वितीयज्ञानानन्तर तादृशज्ञानान्तरा-नुत्पत्तेः सिद्धत्वात् ।

किञ्च न चाय नियमः । यत्सर्वमेव पूर्वज्ञानमुत्तरेण विरोधिविषयिणा बाध्यत एवेति, किन्तूत्तर ज्ञानं यदि दुष्टकारणजन्यत्वबोधेन, "नैतदेवमिति" विषयान्यथात्वबोधने वा बाधित न भवति तदैव । स बाधके हि द्वितीयस्मिन्निर-पवाद प्रथममेवौत्सर्गिक प्रामाण्य लभते । न च तृतीयमेव किमिति द्वितीयेन न बाध्यत इति वाच्यम्, अज्ञायमानदोष हि बाधक भवति, न च द्वितीय तथा, किन्तु तृतीयमेव । यदा तु तृतीयेऽपि ज्ञाने दोषनिर्णयो बाधकज्ञान वा जायते तदा द्वितीयेनैव पूर्वज्ञानस्य बाधः । तस्माच्चतुर्थादूर्ध्वम् पञ्चमसप्तमादीना तृती-यज्ञानविषयसमसख्याकविषयकज्ञानानामङ्गीकारेऽपि तेपा तृतीयज्ञानकार्यकारितया तृतीय-स्थानीयत्वेन षष्ठाष्टमादीना समसख्याकविषयकज्ञानाना च चतुर्थज्ञान-कार्यकारितया चतुर्थस्थानीयत्वेन न चतुर्थज्ञानाधिका कापि बुद्धिर्बाधकत्वेन प्रार्थ्यत इति चतुर्थज्ञानावसान एवाप्रामाण्यनिर्णय इति कथमनवस्था ?

किञ्चाप्रामाण्यस्य परतस्त्वादेव ज्ञानस्य कारणेषु दोपसशयाज्जायमानस्त-दप्रामाण्यसशय स्वस्वभावादेवाप्रामाण्यमिव प्रामाण्यमपि कोटितयावलबतइति न स्वत. प्रामाण्यपक्षे तत्सशयानुपपत्ति. । एवञ्च चक्षुरादीनामिव शब्दानाम-प्यौत्सर्गिक प्रामाण्यम् । अप्रामाण्यन्तु पौरुषेयेषु वाक्येषु वक्तृदोषाधीनम् । दोषाश्च यत्र वक्तुः गुणैरपाकृतास्तत्र लौकिकेष्वपि वाक्येष्वनपोदितमेवौत्सर्गिक प्रामाण्यम्, अन्यत्र चाऽप्रामाण्यम् इति लौकिक वाक्य किञ्चित् प्रमाणम्,

किञ्चिच्चाऽप्रमाणम् इति व्यवस्था सूपपादा । अपौरुषेये तु वेदे निर्मातुः पुरुषस्यैवाऽभावात् दोषाणामनाश्रयत्वादभाव इत्यौत्सर्गिकस्य प्रामाण्यस्यानपोदितत्वाद्वेदः प्रमाणमेव । न च लोके शब्दस्य प्रामाण्य वक्तृगुणाधीनमेव दृष्टम्, अन्वयव्यतिरेकानुरोधात् । वेदे तु दोषाणामिव गुणानामपि वक्तुरभावेन निराश्रयत्वादभावेन सुतरामप्रामाण्यमेवेति वाच्यम्, प्रमाणभूतेषु पौरुषेयेषु वाक्येषु हि न गुणानां केवलानामेवाऽन्वयव्यतिरेकौ प्रामाण्य प्रति दृश्येते, किन्तु दोषाभावस्यापि । न च दोषाभावस्य गुणैरन्यथासिद्धि, गुणस्य प्रामाण्य प्रति करणत्वे हि सा स्यात् । तच्च पूर्वमेवाऽनवस्थादिभिर्दोषैर्दूरतरमपाकृतम् । अतः पौरुषेयवचसि दोषाभाव एव प्रामाण्यकारणम् । स च लौकिक वाक्येषु वक्तृदोषस्यापि सम्भवात्कियता प्रयत्नेनापि निर्णीतो भवति । वेदे तु निर्मातृपुरुषाभावादेव स्वतस्सिद्ध इति प्रामाण्यमेव वेदस्य । न चैव सति दोषाभावनिबन्धनत्वादेव वेदे प्रामाण्यस्य परतस्त्वमापतितमिति वाच्यम्, दोषाभावो ह्यपवादाभाव एवोपयुज्यते, न तु प्रामाण्ये साक्षात् । यत्र हि विपर्ययज्ञानात्साक्षादेवार्थान्यथात्वमवधार्यते, यत्र च दोषज्ञानेन परम्परया, तत्रोभयत्रापि दोषा एवाप्रामाण्ये कारणम् । गुणास्तु तदभावप्रयोजका. । अतो दोषाभावादेवोक्ताप्रामाण्यद्वयासम्भवादौत्सर्गिकस्य प्रामाण्यस्य नापवादो वक्तु शक्यते । असति चापवादे यदि प्रत्यक्षादीनामिव पौरुषेयवाक्यानामपि ज्ञानजनकत्वात्प्राप्तमौत्सर्गिक प्रामाण्य न केनाप्यपनीयते, तदा कथमिव सम्भाव्येतापि वेदस्यापौरुषेयस्य गुणाप्रयुक्तत्वेन स्वतस्सिद्धाद्दोषाभावात्तयोऽपि दृढतर प्रामाण्य केनापि कदाचिदप्यपनीयेतेति ।[1]

ननु सर्वत्र ज्ञाननिष्ठप्रामाण्यस्य सवादनिबन्धनत्व दृश्यते । प्रमाणान्तरसवाद एव हि सर्वेषां प्रत्यक्षादीना पौरुषेयवाक्यानाञ्च दृढतरप्रामाण्ये निबन्धनम् । वेदे च नास्य गन्धोऽपीति कथमस्य प्रामाण्यमिति चेत्, अत्रोच्यते—

---

१. शब्दे दोषोद्भवस्तावद्वक्त्रधीन इति स्थितिः ।
तदभावः क्वचित्तावद्गुणवद् वक्तृकत्वतः ॥६२॥

तद्गुणैरपकृष्टाना शब्दे सक्रान्त्यसभवात् ।
यद्वा वक्तुरभावेन न स्युर्दोषा निराश्रयाः ॥६३॥

पौरुषेये द्वयं दृष्ट दोषाभावो गुणास्तथा ।
प्रामाण्यं तत्र गुणतो नैव स्यादित्युदाहृतम् ॥६४॥

तस्माद्गुणेभ्यो दोषाणामभावस्तदभावत. ॥६५½॥

—श्लोकवार्त्तिकम्—२-६२-६५½

प्रमाणान्तरसंवादो न प्रामाण्ये क्वापि निबन्धनम्। यत्र ह्येकस्मिन्विषयेऽनेकेषां विज्ञानानां सन्निपातः, तत्र तेषामन्योन्यनिरपेक्षतया पृथक् पृथगेव प्रामाण्यं न तु समुच्चितानाम् इति नैकप्रामाण्येऽन्योपकारः। दृश्यते हि नैयायिकावधारितस्यापि शब्दानित्यताज्ञानप्रामाण्यस्य मीमांसकैरपवादः। एवं तत्तद्दार्शनिकसिद्धान्तप्रामाण्यमपि दार्शनिकान्तरैरपोद्यते। यदि च संवादनिबन्धनत्वं प्रामाण्यस्य स्वीक्रियेत तर्हि संवादिज्ञानस्य प्रामाण्यं किं निबन्धनं भवेत्? अत अनवस्थादोषभिया संवादज्ञानस्य स्वतः प्रामाण्यं स्वीकर्तव्यम्। तथासति लाघवात्प्रथमज्ञान एव स्वतः प्रामाण्यं कुतो नेष्यते? न हि द्वितीयादिज्ञानेन सह किञ्चिदस्ति मैत्रीकरणम्, येन तत्रैव तदभ्युपेयेत। न वा प्रथमज्ञाने द्वेषस्य कश्चिदस्ति हेतुः, येन तत्र न तदभ्युपेयेत। तदुक्तं भट्टपादैः—

**कस्यचित्तु यदीष्येत स्वत एव प्रमाणता।**
**प्रथमस्य तथाभावे प्रद्वेषः किं निबन्धनः॥**[1]

अथ प्रथमज्ञानादर्थक्रियाज्ञानस्यार्थाव्यभिचार एव विशेषः, येन तत्रैव स्वतः प्रामाण्यमभ्युपेयं न प्रथमज्ञाने। न च स्वप्नावस्थायामसत्यप्युदकाहरणे तद्रूपार्थक्रियाज्ञानदर्शनाद् व्यभिचार इति वाच्यम्, भावानवबोधात्। अर्थक्रियापदेन हि सुखदुःखे एव विवक्ष्येते, तत् प्रत्यक्षमव्यभिचारि च। न हि क्वचिदप्यसति सुखादौ सुखादिप्रत्यक्षं भवति, तस्य ज्ञानसत्तासमनियतसत्ताकत्वादिति चेत्, स्यादप्येवं यदि सुखादिप्रत्यक्षेण पूर्वज्ञानस्य प्रामाण्यमध्यवसीयेत। न त्वेवम्, स्वप्नावस्थायामुत्तरभाविना सुखानुभवेन कान्तालिङ्गनज्ञानस्य प्रामाण्यानध्यवसायात्। तस्मादर्थक्रियाज्ञानसंवादोऽपि न प्रामाण्येऽपेक्षणीयः।

किञ्च, यदि संवादस्य प्रामाण्ये निबन्धनत्वं तदा श्रावणप्रत्यक्षस्य प्रामाण्यं न स्यात्, चाक्षुषादिप्रत्यक्षैः संवादाभावात्। यदि तु विजातीयैः प्रत्यक्षैः संवादाभावेऽपि श्रावणैरेव सजातीयैः संवादाच्छ्रावणप्रत्यक्षस्य प्रामाण्यमुपपाद्यते, तदा विजातीयैरनुमानादिभिः संवादाभावेऽपि तत्तदुच्चारणानन्तरं जायमानाभिर्वेदार्थबुद्धिभिस्संवादस्य वेदार्थबुद्धावपि सम्भवात्कथं न वेदानां प्रामाण्यम्? तस्माद् गुणसंवादार्थ-क्रियादीनां प्रामाण्येऽनपेक्षितत्वाद्वेदप्रामाण्यं सुस्थितम्।

## तदयमत्र पूर्वोत्तरपक्षयोस्संग्रहः

पटदर्शनमात्रेण न पटो निश्चेतुं शक्यते, क्वचिदपटादपि पटज्ञानोदयात्,

१. श्लोकवार्त्तिकम् चोदनासूत्रम्, श्लोक ७६, पृष्ठ—

किन्तु अर्थक्रियानुभवादेव तद्धेतुभूतपटनिश्चयपुरस्सर पूर्वस्य पटज्ञानस्य पटादुत्पत्तिर्निश्चेतव्या । अर्थक्रियाज्ञानन्त्वव्यभिचारात् स्वत प्रामाण्यमर्थक्रिया निश्चाययच्छक्नोति पूर्वज्ञानस्य प्रामाण्य निश्चाययितुम् । तथा ज्ञानान्तरसवादोऽपि नाऽर्थतथात्वाभावे घटत इति ततोऽप्यर्थतथात्वनिश्चय तथा गुणवत्कारणजन्य विज्ञान यथार्थमेव भवतीति कारणगुणावधारणादपि शक्येतार्थस्य तथाभावो निश्चेतुम् । तस्मात्परत एव ज्ञानस्य प्रामाण्यनिश्चयो न स्वतस्तस्यार्थतथात्वलक्षण प्रामाण्य निश्चेतु शक्यम्, अनैकान्तिकत्वात् । अनिश्चिते चार्थे नास्ति प्रामाण्यमित्यप्रामाण्यमेव ज्ञानस्य स्वत । किञ्च प्रामाण्यप्रागभावो न दोषज्ञानेन शक्यते जनयितुम् । प्रामाण्यन्तु वस्तुत्वात् शक्यते गुणज्ञानादिना जनयितुम् । तस्मात्परम् एवार्थतथात्वरूपप्रामाण्य निश्चीयत इति पूर्वपक्षसग्रह ।

सिद्धान्तस्तु- न ज्ञानमव्यभिचारमुखेनैवाऽर्थ निश्चाययति, किन्तु स्वत एव । यदि हि स्वतो निश्चेतु न शक्नुयात् तथासति निश्चयात्यन्ताभाव एव स्यादित्यान्ध्यमेवाशेषस्य जगतो भवेत् । न हि स्वतो निश्चितोऽर्थ परतो निश्चेतु शक्यते । परस्यापि तद्वदेवासामर्थ्यात् । यथाहि पटज्ञानमसत्यपि पटे दृष्टमित्यनिश्चायक, तथाऽर्थक्रियाज्ञानमप्यसत्यामेवार्थक्रियाया स्वप्नावस्थाया दृष्टमिति न तेनापि सा निश्चेतु शक्या नतरा तया पटनिश्चय इत्यायातमान्ध्य जगत. । अथाऽर्थक्रियाशब्देन नोदकाहरणादिकमुच्यते । किन्तु ज्ञानमेव सुखात्मकम्, सुखज्ञान स्वात्मनि स्वत एव प्रमाणमव्यभिचारादित्युच्यते, तथासति भवतु नामार्थक्रियानिश्चयस्तथापितु न तया पूर्वज्ञानस्य याथार्थ्यं शक्य विज्ञातुम् । अयथार्थेनापि चन्दनलेपादिना सुखोत्पत्तेर्दर्शनात् । अपि च गृहीताविनाभावयाऽर्थक्रियया पूर्वज्ञानविषयस्यनिश्चयश्चेत्-अनुमानमेवैतत्स्यात्-कार्यात्कारणगोचरम् । न चाऽगृहीते सम्बन्धिनि सम्बन्धग्रहणसम्भव. । तेन सम्बन्धग्रहणसमयेऽवश्य पटज्ञानादेव पटनिश्चयोऽङ्गीकर्तव्य । एव गुणज्ञानसवादयोरपि स्थितिः । न हि गुणज्ञानाद्गुणो निश्चेतु शक्यते, कि पुन पूर्वज्ञानप्रामाण्यम् ? तथा सवादेऽपि । सवादो नाम-तद्विषय ज्ञानान्तरम् । तस्य पूर्वज्ञानात्को विशेषः ? येन पूर्वज्ञानेनाऽनिश्चितमनेन निश्चीयेत । तस्मात् स्वत एव प्रमाण्यम्, परतश्चाऽप्रामाण्य दोष[१] ज्ञानाद् बाधकज्ञानाद्वा निश्चेयम् ।

ननु-अवस्तुत्वान्न दोषजन्यमप्रामाण्य भवति, अतस्तज्जन्यञ्च न ततोऽवधारयितुं शक्यम् । उच्यते-न तावत्प्रामाण्यप्रागभावरूपमप्रामाण्य दोषैर्गम्यत

---

१. यस्य च दुष्ट कारण यत्र च मिथ्येति प्रत्यय स एवाऽसमीचीनः प्रत्यय. इति शाबरं भाष्यम् ।

इत्युच्यते, किन्तु-अर्थान्यथात्वरूपम् । तद्धि-शक्य दोषज्ञानेन निश्चेतुम्, दोष-निमित्तकत्वादयथार्थत्वस्य, दुष्टेषु करणेष्वयथार्थज्ञानजनकत्वदर्शनात् । वेदेऽपि स्वतस्तावत्प्रामाण्य दोषाभावादनपोदित स्थितम् ।

कथ पुनरवगम्यते-दोषनिमित्तकमयथार्थत्वं न गुणाभावनिमित्तमिति ? सर्वत्र हि गुणविधुरेषु दुष्टेषु च करणेषु-अयथार्थत्व ज्ञायते । तत्र कुतोऽयं विवेक'—यद्दोष एव निमित्त न गुणवैधुर्यमिति । तस्माद्यद्यपि परतएवाप्रामाण्योपलक्षणम्, तथापि गुणाभावादेवोपलक्षणसम्भवाद् वेदे चाप्तप्रणीतत्वगुणाभावात् स्वरसतः प्राप्तप्रमाणभावस्यापि वेदस्य परत एव गुणाभावादप्रामाण्यमापद्यत इति ।

तत्राभिधीयते-दृष्टानुसारिणी हि कल्पना साधीयसी परिगण्यते, न दृष्टवैपरीत्येन । तेन वेदस्य स्वत एव प्राप्तं प्रामाण्य यथा न विरुध्यते तथा चैतत् कल्पयितु शक्यते, न ततो विरुद्धम् । तेन यद्यपि प्रसिद्धेष्वयथार्थज्ञानेषु गुणाभावो दोपाश्च दृष्टा', तथापि वेदे गुणाभावेऽपि प्रामाण्यदर्शतात् तन्मा बाधीति दोपनिमित्तमेवायथार्थत्व शुक्तिकारजतादिज्ञानाना कल्प्यते । अन्यथा हि ज्ञानत्वनिबन्धनमप्यऽयथार्थत्व कल्प्यते । सर्वेष्वप्रमाणेषु ज्ञानत्वदर्शनात् । तत्र यथार्थेष्वपि प्रत्यक्षादिपु ज्ञानत्वदर्शनान्न तन्निमित्तमयथार्थत्वम्, एवगुणाभावोऽपि यथार्थे वेदे दृष्टत्वान्नायथार्थत्वस्य निबन्धनम् । वेदस्य यथार्थत्वमसिद्धमिति चेत्-प्रत्यक्षादीनामपि तस्सिद्धम्? स्वत इति चेद्, वेदेऽपि कुतत्समानम्-अन्यत्र नास्तिक्याभिनिवेशात् । तस्मान्न तन्निबन्धनमप्रामाण्यम् ।

अपि च शुक्तिकारजतादिज्ञाने गुणाभावेऽपि शुक्लभास्वरत्वादीना तथाभूतानामेव दर्शनान्न गुणायत्त यथार्थत्वं ज्ञामस्याभ्युपेयते । यदि तु स्वकारणादेव यथार्थत्व दोषाच्चाऽयथार्थत्वमित्युच्यते, तर्हि शुक्तिकारजतादिज्ञानानि स्वकारणवशाद् दोपाच्च तथाभूतं शुक्लत्वादि, अतथाभूतञ्च रजतत्वादिकं गोचरयन्तीति स्यात् । तस्मात् । स्वन. सिद्ध प्रामाण्य सर्वज्ञानानाम्, तच्च वेदस्याऽनपोदित भवतीति ।

एवन्तावत् परत प्रामाण्यवादिना मत परिशीलितम् । तत्र साख्यानामभिमत प्रामाण्याप्रामाण्ययोस्स्वतस्त्ववाद नैयायिकाभिमतेन प्रामाण्याप्रामाण्ययोः परतस्त्ववादाद् विरुद्धः । नैयायिकसिद्धान्तश्च सौगतसिद्धान्तेनसहविरोधमावहति । सौगतसिद्धान्तश्च त्रिभ्योर्वेदिकमतेभ्योर्विरुध्यते । वैदिकाना प्रामाण्यप्रकारे परस्पर विरोवे सत्यपि वेदप्रामाण्यविषये न काचिद्विप्रतिप्रत्तिः । लक्ष्यन्त्वेकमेव वेदानां प्रामाण्यसाधनम् । सौगतास्तु वेदबाह्याः । तेषा कथमप्यवसरो न देय इति मीमासकैस्तद्विरुद्ध पन्था आविष्कृतः । अयथार्थज्ञानमेव नास्ति, न किमपि

ज्ञानमर्थं व्यभिचरति इति साधयन्तः प्राभाकराः सौगताभिमतं वेदाप्रामाण्यं निराचक्रुः। भाट्टास्तु वेदानामपौरुषेयत्वं ज्ञानानां च स्वतः प्रामाण्यं साधयन्तः तदभिमतमखण्डयन्। यत्र परतः प्रामाण्ये सौगतनैयायिकयोस्तुल्येऽपि प्रकारे भूयानस्ति भेदः। किन्तु मीमांसकैस्सह नैयायिकानां न तादृशो भेदः। नैयायिका अर्थक्रियासंवादादिज्ञानानां स्वतस्त्वं स्वीकुर्वन्तो मीमांसकसमीपमागच्छन्त्येव। तथाहि नैयायिकमीमांसकयोर्भेदो नातीव भवति तथा कांचन सरणिमाश्रित्य प्रामाण्यस्य स्वतस्त्वपरतस्त्वरूपं विषयं विवेचयामः।

## प्रामाण्यस्य स्वतस्त्वपरतस्त्वनिष्कर्षः

वेदस्यापौरुषेयत्वे स्वसजातीयोच्चारणसापेक्षोच्चारणसामान्यकत्वरूपे सिद्धे तस्यानभिशङ्क्यत्वं सिध्यति। तथाहि—प्रामाण्यं सत्यार्थानुभावकत्वादन्यद् दुर्वचनम्। तच्च वेदान्तिनां मते सत्यं ज्ञानमनन्तं ब्रह्म इत्यादि श्रुतिबोधित-सत्यस्वरूपब्रह्मतादात्म्यवत्तयैव ज्ञानमात्रे विषयस्य मानाभ्युपगमात् स्वतः सिद्ध-मेव स्वतो ग्राह्यमित्युच्यते। भाट्टानां मते तु कालसम्बन्धित्वमेव सत्यत्वं तद्वि-शिष्टार्थानुभावकत्वञ्च शब्दानां स्वतस्सिद्धम् न सोऽस्ति प्रत्ययो लोके यत्र कालो न भासते इत्युक्तेः। प्राभाकरमते तु ज्ञानमात्रस्य अबाधितार्थविषयकत्वाज्ज्ञान-विषयत्वरूपं सत्यत्वम्, अतएव शुक्तिरजतादिभ्रमस्थलेऽपि सत्यतादात्म्यस्य स्व-भावतः स्फुरणादेव रजतार्थिनां प्रवृत्तिरुपपद्यते। पश्चाद्बाधकज्ञाने सति दुष्करण-जन्यत्वशङ्कायां वा सत्यां पूर्वमपि प्रातिभासिकरजतादौ मिथ्यात्वग्रहात् पूर्वगृहीतं प्रामाण्यमपोद्यते। एवञ्च प्राप्ताप्राप्तविवेके क्रियमाणे मिथ्यात्वेनाऽज्ञायमान-रजतविषयकज्ञानस्यैव शुक्तिरजतादिस्थले प्रवृत्तिप्रयोजकमर्थंगतं सत्यत्वं यत्-पूर्वमासीत् तदेव कारणदोषबाधकज्ञानादिसम्भवे प्रातिभासिकरजताद्विदुष्यतीति सिध्यति। भूतले घटानयनान्तरं घटाभावस्यैव मिथ्यात्वेन ज्ञायमानतादशायां तेन रूपेणाऽज्ञायमानतारूपस्य तदभावसमशीलार्थसत्यत्वस्यापि विलोपे कस्याप्यवि-प्रतिपत्तेः। अयमेव विलोपः करणदोषबाधकज्ञानाभ्यां पूर्वसिद्धस्य प्रामाण्यस्या पवादपदार्थः इत्यत्रापि न कस्यापि विप्रतिपत्तिः।

नैयायिका अपि हि—अप्रामाण्यज्ञानास्कन्दितस्य शुक्तिरजतज्ञानस्य प्रवर्त-कत्वं मन्यन्ते। तन्मतानुसारेणापि प्रवृत्तिप्रयोजककोटिप्रविष्टम् अप्रामाण्यज्ञाना-नास्कन्दितत्वं ज्ञानगतं वेदान्तिमतसिद्धेन मिथ्यात्वेनाऽज्ञायमानत्वरूपेणाऽर्थगत-सत्यत्वेन समशीलमेवेति नास्ति कोऽपि मतयोरनयोर्विशेषः। एवञ्च बाधकरण-

दोषज्ञानादिभिः नैयायिकमतेऽपिप्रवृ त्तिप्रयोजकीभूतस्याप्रामाण्यज्ञानास्कन्दितत्व-स्याऽपवादो निरपाद एव । एवविधस्य प्रामाण्यस्य परतः प्रामाण्यम् इति वादि-भिर्नैयायिकैः स्वतः प्रामाण्यवादिनामुपरि दीयमानं दूषणमप्यस्थान एवेत्यधुना सम्पन्नम् । वेदान्तिमते साक्षिप्रत्यक्षग्राह्यत्वात्सन्देहविपर्ययाद्यविषयत्वम्, ज्ञानस्य तत्प्रामाण्यस्य च नैयायिकमते तु प्रतियोगिस्मरणयोग्यानुपलब्धिसहकृत मनोजन्य-प्रत्यक्षविषयत्वसम्भवस्थले मनोग्राह्यत्वम्, असम्भवस्थलेऽपि च सन्देहविपर्ययाद्य-विषयप्रत्यक्षत्वमेवम् । ज्ञानाज्ञानविषयकसन्देह प्रति ज्ञानाज्ञानयोः स्वरूपत एव हि तन्मते प्रतिबन्धकत्वात् । तदुक्तम्—न हि "जानन्नेव न जानामीति" प्रत्येति इति । अत्र जानन्निति अजानन्नित्यस्याप्युपलक्षणम्, न जानामीति च जानामीत्य-स्यापि, अनुभवतौल्यात् । भट्टगुरुमतयोरप्ययमेव पन्थाः । तथा च सर्वस्मिन्नपि मते मिथ्यात्वेनाऽज्ञायमानस्य प्रवृत्तिप्रयोजकप्रामाण्यस्याऽसन्दिग्धत्वरूपस्वतस्सिद्धत्वे नाऽस्ति काचन विप्रतिपत्तिः । अतो नैयायिकैर्मीमांसकानामुपरि दीयमान दूष-णमस्थान एवेति सम्पन्नम् । न हि त्रिकालाबाधितत्वरूप व्यावहारिकसत्यत्वम्, सर्वथाऽबाध्यत्वरूप पारमार्थिकसत्यत्व वा उत्पत्तौ ज्ञप्तौ वा स्वतस्सिद्धत्वमिति वेदान्तिनो भाट्टाः प्राभाकरा वा वदन्ति, तस्याऽतीन्द्रियकालत्रयघटितत्वेन वेदान्तिमतरीत्या साक्षिभास्यत्वासम्भवात्, तदन्यमतरीत्या असन्दिग्धत्वासम्भा-वाच्च तै परतस्त्वस्यैवाङ्गीकारात् । एवञ्च तदभाववति तदप्रकारकत्वरूपप्र-मात्वस्य ज्ञानगतस्य प्रतिपन्नोपाधौ त्रैकालिकनिषेधाप्रतियोगित्वरूपवेदान्तिम-तसिद्धार्थगतसत्यत्व समशीलस्य परतस्त्व नैयायिकैरुच्यमान न कश्चिदपराधः, तद्विषये उभयोरपि समशीलत्वात् । तथाचोभयमतरीत्यापि तदनुमेयमेव न साक्षिमात्रभास्यम् । तदनुमितिस्तु सवादिप्रवृत्तिजनकत्वादिभिर्हेतुभिरुभयमतेऽपि कर्त्तव्यैव ।

"यजेत स्वर्गकामः" इत्यादि वाक्यजन्यबोधे ऐहिकदेहानुपभोग्यपारलौकिक-सुखसाधनताविषयके सवादिप्रवृत्तिजनकत्वस्य हेतोर्ज्ञान कस्यापि न सम्भवतीति तादृशबोधकस्य त्रिकालाबाध्यवस्तुविषयकत्व कथमनुमेयमित्ययमशो नून विमर्श-नीयः । अत्रेदं वक्तुशक्यम्—

सवादिप्रवृत्तिजनकत्वेन हेतुना त्रिकालाबाधितविषयकत्वरूपं प्रामाण्यमनु-मीयत इति वदता नैयायिकाना नायमाशयः—यदेकमात्रेणाऽनेनैव हेतुना त्रिका-लाबाध्यवस्तुविषयकत्वमनुमेयमिति । इय पृथिवी इति ज्ञाने हि प्रामाण्य गन्धवद्विशेष्यकत्वे सति पृथिवीत्वप्रकारकत्वेन हेतुनाऽप्यनुमीयत इति तैरिष्यते । तथा च सवादिप्रवृत्तिजनकत्व प्रामाण्यानुमितौ हेतुरिति तेषामभिधान यथास-म्भवमन्येषामपि हेतूनामुपलक्षकमित्येव तेषामाशयः । अतः स्वर्गकामादिवाक्यज-

न्यबोधसाधारण्येन व्यावहारिकसत्यत्वानुमितिहेतवः के वा सम्भवेयुरिति विमर्शोऽधुना प्राप्तावसरः ।

तत्र हेत्वाभास-सामान्यनिरुक्ति-गूढार्थतत्वालोकादिग्रन्थदर्शनेन नैयायिकाः ज्ञानसामान्य एव विशिष्टविषयकत्व नामाऽग्रेवक्ष्यमाणस्वरूप प्रामाण्यचिह्नं स्वतोग्राह्य स्वीकुर्वन्तीति प्रतीयते । तथाहि—यद्विषयकत्वेन ज्ञानस्यानुमितिप्रतिबन्धत्वं तत्व हेत्वाभासत्वमिति लक्षणे पर्वतो वह्निमान् धूमात् इत्यादि सद्धेतुस्थलेऽपि पर्वतो वह्न्यभाववान् इत्यादि भ्रमात्मकज्ञानमादायाऽनुमितिप्रतिबन्धकीभूततादृशज्ञान विषयत्वस्य प्रमाविषयीभूते पर्वतादौ सत्वात् हेत्वाभासलक्षणस्यातिव्याप्तिमाशङ्क्ययद्विषयकत्वव्यापिका प्रकृतानुमितिप्रतिबन्धकता तत्व हेत्वाभासत्वम् इति लक्षणे परिष्क्रियमाणे पर्वतादौ नातिव्याप्तिः, पर्वतविषयकस्य पर्वतो वह्न्यभाववान् इत्यादियत्किञ्चिज्ज्ञानस्याऽनुमितिप्रतिबन्धकत्वेऽपि पर्वतविषयकाणामेव बहूना ज्ञानाना पर्वतो वह्निमान्, पर्वतो धूमवान्, पर्वतः पाषाणमय , पर्वतस्सुन्दरः इत्यादीनामनुमित्यप्रतिबन्धकत्वेन प्रागुक्तपरिष्कृतलक्षणे यत्पदोपादेयपर्वतविषयकत्वस्य तादृशबहुज्ञानावृत्तितया व्यापकत्वासम्भवात् इति सद्धेतुस्थले नातिव्याप्तिरिति सिद्धान्तिते, पुनः ह्रदो वह्निमान् धूमात्, इत्याद्यसद्धेतुस्थले साध्याभाववत्पक्षरूपबाधरूपहेत्वाभासस्य वह्न्यभाववद्ह्रदादेः परिष्कृतलक्षणानुसारेण यत्पदेनोपादाने विशिष्ट शुद्धान्नातिरिच्यत इति न्यायेन तादृशह्रदविषयकत्वस्य शुद्धह्रदविषयकेषु ह्रदो जलवान्, ह्रदो मीनवान्, ह्रदः शैवालवान् इत्यादिष्वनेकेषु ज्ञानेषु विद्यमानतया अनुमितिप्रतिबन्धकत्वस्य च पूर्वोक्तरीत्यैव तादृशबहुज्ञानावृत्तित्वेन अव्यापकतया यद्विषयकत्वव्यापिका प्रकृतानुमितिप्रतिबन्धकता न जातेति लक्षणस्याऽनुपपत्तिमाशङ्क्ययद्विषयकत्वपदेन विशिष्टविषयकत्वमेव लक्षणे विवक्षितम्, तेन शुद्धह्रदविषयकज्ञानामा विशिष्टविषयताशून्यत्वात् तादृशविशिष्टविषयतावतः केवलस्य ह्रदो वह्न्यभाववान् इति ज्ञानस्य नियमेनानुमितिप्रतिबन्धकत्वात् यादृशविशिष्टविषयकत्वव्यापकं प्रकृतानुमितिप्रतिबन्धकत्व तादृशविशिष्टत्वम् इति लक्षणे परिष्क्रियमाणे न काचिदनुपपत्तिरित्यभिहित हेत्वाभासग्रन्थे ।

अत्र गूढार्थतत्वालोकपत्रिकायामयमर्थस्सकलनैयायिकसम्प्रतिपन्न एवमाविष्कृतः—यथार्थज्ञानमात्रे शुद्धविषयकत्वादन्यद्विशिष्टविषयकत्वमप्यनुभूयमान ज्ञानमऽस्ति ।

ह्रदो वह्न्यभाववान् इति ज्ञानान्तर वह्न्यभाववद्ध्रदमह जानामि इति पूर्वोत्पन्नं ज्ञान प्रत्यवमृश्यते लोके, तदेव विशिष्टविषयताया प्रमाणम् । तथाहि पर्वतो वह्न्यभाववान् इति भ्रमानन्तरमपि तस्य भ्रमत्वाज्ञानदशाया यद्यपि

व ह्न्यभाववत्पर्वतमह जानामि इति प्रत्यवमर्शः पूर्वोक्तयथार्थज्ञानप्रत्यवमर्शेन सह तुल्य एवोदेति, तथापि गृहीतमात्र एव ज्ञानस्य भ्रमत्वे तादृशः प्रत्यवमर्शः पुनर्नोत्पद्यते। पर्वतो वह्न्यभाववान् इति ज्ञानस्य भ्रमत्वे गृहीते सति हि पर्वत वह्न्यभाववत्तया जानामि इत्येव वदन्ति लौकिका, न तु जातुचिदपि वह्न्यभाववत्पर्वतमह जानामि इति वदन्ति। तेन विशिष्टविषयकत्वप्रत्यवमर्शो भ्रमत्वाज्ञानदशायामेव जायते, अन्यथा तु न भवतीति लौकिकोऽनुभवः। पर्वतो वह्न्यभाववान् इति भ्रमे च भ्रमत्वाज्ञानरूपदोषवशात् पूर्व वह्न्यभाववत्पर्वतमह जानामीत्याकारको विशिष्टविषयकत्वावगाही प्रत्यवमर्श. तादृशदोषजन्यत्वाद्भ्रमरूप एवेति न ततो विशिष्टविषयकत्वसिद्धि। ह्रदो वह्न्यभाववान् इत्यादियथार्थज्ञानेषु तु वह्न्यभाववद्ध्रदमह जानामि इत्यादि प्रत्यवमर्शस्याबाधितत्वात् विशिष्टविषयकत्वसिद्धि निष्प्रत्यूहेति।

अत्रेद प्रतिभाति-हितोपदेशादिषु वर्ण्यमानाया धूर्तत्रयकथाया यथार्थमज स्वस्कन्धेनाऽऽहरतो ब्राह्मणस्य "मया नीयमानमजमह जानामि" इति जातोऽपि यथार्थः प्रत्यवमर्श विशिष्टविषयकत्वविशिष्टज्ञानविषयक प्रथमधूर्तवाक्येनैकाकितया दुर्बलेनाप्रतिबद्धोऽपि द्वितीयधूर्तवाक्येन किञ्चित्प्राबल्यभाजा समुत्पादितायामप्रामाण्याशङ्काया पुन स्कन्धादवरोप्य परीक्षणेनाप्रामाण्यशङ्कायामपनीताया कथञ्चित् स्थिरीकृतोऽपि तृतीयधूर्तवाक्ये श्रुते दुर्बलहृदयेन ब्राह्मणेन बहुजनविपरीतोक्तित्वमात्रेण हेतुना स्वचक्षुषोरसद्भूतमपि दोषविशेष परिकल्प्य परित्यक्तोऽज इति वर्णनोपलम्भाद् गृहीतमपि विशिष्टविषयकत्व ज्ञानगत अप्रामाण्यज्ञाने सत्यन्तर्हित भवतीति स्वीक्रियते, न पुनर्नास्त्येवेति, तादृशाजज्ञानस्य यथार्थत्वेन विशिष्टविषयकत्वानपायात्। अतो यथार्थज्ञानमात्रस्य निर्दुष्टकरणजन्यतया स्वत एव विशिष्टविषयकत्व समस्तीति प्रामाण्यचिह्नमेतत् उत्पत्तौ स्वत सिद्धमपि धूर्तत्रयप्रतारितब्राह्मणवत् दुर्बलहृदयस्यान्तर्हितमपि भवतीति स्थिते, स्वर्गकामादिवाक्यजन्यबोधेऽपि दुर्बलहृदयानामन्तर्हितमपि अतथाविधाना स्फुटमेवेति। तदुक्त सक्षेपशारीरके सर्वज्ञात्ममुनिना—

> **पुरुषापराधमलिना धिषणा**
> **निरवद्यचक्षुरुदयाऽपि यथा।**
> **न फलाय भर्तृविषया भवति**
> **श्रुतिसम्भवाऽपि तु तथाऽऽत्मनि धीः॥१४॥**
>
> **पुरुषापराधविगमे तु पुनः**
> **प्रतिबन्धकव्युदसनात्सफला।**

**मणिमन्त्रयोरपगमे तु यथा**
**सति पावकादुद्भवति धूमलता ॥१५॥**[1]

---

1. संक्षेपशारीरकम् १-१४-१५ अत्र मधुसूदनसरस्वतीनां व्याख्या-ननु शारीरकार्थविषयमवगतिप्रधान प्रकरणं करवाणीत्युक्त तन्नोपपद्यते । शारीरकमीमासाया एव प्रयोजकाभावेनासंगतत्वात् । शिष्यजिज्ञासितसन्दिग्धार्थनिर्णयाय भगवता निरस्तसमस्तैषणेन "अथातो ब्रह्म जिज्ञासा" इत्यारब्धव्यम् । शिष्यस्य च ब्रह्मण्यत्यान्तानुपलब्धे जिज्ञासा वा सन्देहो वा कथ भवेत् । धर्मिज्ञानसाध्यत्वात्तयो । तच्च निर्विशेषे ब्रह्मणि न प्रत्यक्षादिना सम्भवति । रूपादिहीनत्वात्तस्य । अद्वितीये तस्मिन् लिङ्गासम्भवाच्च । अद्वयमेव हि ब्रह्म मुमुक्ष प्रति शारीरकेण विचार्यते । सगुणब्रह्मविचारस्य प्रासगिकत्वात् । नापि वेदान्तात्तज्ज्ञानम् । विचारात्पूर्व ततस्तदयोगात् । अन्यथा विचारवैयर्थ्यात् । न चापातज्ञानं विचार विनापि भवतीति वाच्यम् । तस्यैवानिरूपणात् । नि सामान्यविशेषे ब्रह्मणि सामान्यविषयस्य तस्यासम्भवादपरोक्षे ब्रह्मणि परोक्षज्ञान रूपस्य तस्यायोगात् । अतः शिष्यस्य जिज्ञासाऽसम्भवादजिज्ञासितार्थनिर्णये प्रेक्षावतः प्रवृत्त्ययोगादसगतैव शारीरकमीमासेति तदर्थविषयमिद प्रकरण सुतरामसंगतमित्याशङ्क्य विचारात्प्रागपि वेदान्तादेवाधिकारिणो विदितपदतदर्थस्य निर्विशेषब्रह्मसाक्षात्काररूप ज्ञान भवत्येव । तच्च श्रोतुरसम्भावनाविपरीतभावनादिचित्तदोषैः प्रमाणमप्यप्रामाण्यशङ्काकलङ्कितमित्यनभ्यासदशापन्नजलज्ञानवत्फलाय न भवतीति ततो विचारप्रयोजिका शिष्यस्य जिज्ञासोपपद्यत इति नोक्तासागत्यमित्यभिप्रेत्य सदृष्टान्तमाह चतुर्भि.—

**पुरुषापराध ··· ··· ··· धीः ॥१४॥**

पुरुषापराधेति । पुरुषस्यप्रमातुरसम्भावनादिलक्षणेनापराधेन मलिना अप्रामाण्यशङ्कया कलङ्किता, न तु प्रमाणस्यापराधेन, तस्य दृष्टान्ते दार्ष्टान्तिके च निर्दोषत्वात् । ननु निर्दुष्टप्रमाणजन्यं ज्ञानम् अप्रामाण्यशङ्कावशादध्यासं न निवर्तयतीति क्व दृष्टमित्याशङ्क्य दृष्टान्तमाह-निरवधेति भर्छुर्नाम कश्चित्कस्यचिद्राज्ञोऽत्यन्त वल्लभो ब्राह्मणो राजोपजीविभिर्मात्सर्याद्द्विष्यमाण आसीत् । स कदाचिद् दैवयोगान्नेत्रेपिधायारण्ये क्षिप्तश्चिरं तत्र स्थितो दैवयोगेनारण्यकैः सह पुरसमीपमागतोऽपि विद्वेषिराजकीयावरूद्धपुरमार्गः पुरं प्रवेष्टु न शशाक । राजा च भर्छुर्मृत प्रेतोजातः इति तैः प्रबोधितः सन् तथैव निश्चयमकरोत् । दैवात्कदाचिद्वहि-

अनेन सन्दर्भेण पुरुषापराधेनैव यथार्थमपि ज्ञान श्रुतिसमुद्भूतम् अप्रामाण्यशङ्काकवलित सत्फलकारि न भवतीति यदुच्यते तद्वेदान्तमतरीत्या, पूर्वोक्तस्य मिथ्यात्वेनाज्ञायमानत्वस्यार्थत्वेनसत्यत्वस्याप्रामाण्यशङ्कया अपवादात्, नैयायिकमतरीत्या विशिष्टविषयकत्वरूपस्य प्रमात्वचिह्नस्य ज्ञानगतस्याप्रामाण्यशङ्कया कवलितत्वादुपपद्यत इदि विषयेऽत्र मतद्वयस्यापि समशीलत्वमेव सम्पन्नम् ।

उत्सर्गापवादसिद्धान्तोऽय तर्कखण्डनप्रस्तावे खण्डनखण्डखाद्यकृता श्रीहर्षेण यो निरूपित, तत्स्वरूपस्यापि खण्डनोद्धारपर्यालोचनया बाधकैकापनोद्यो नियम उत्सर्ग इति लक्षणलक्षित एव सम्यगवबोधे सम्यगेव स्थिरीभवति । तथाहि-नियमो व्याप्तिः । तस्या बाधकैकापनोद्यत्व नाम बाधकाभाववत्स्थलीयव्यक्तिमात्रनिष्ठत्वम् । यथा-प्रदेशविशेषव्यापिनि पर्जन्ये छत्राद्यावरणरहित-

---

र्गतो बाह्योपवने न दृष्ट्वा पि राजा ब्रह्मराक्षस मेने इति ।

यथा सौम्यपुरुष गन्धारेभ्योऽपिनद्धाक्षमानीय त ततोऽतिजने विसृजेत् (छा० अ० ६ ख० १४ श्रु० १) इत्यादि श्रूतिमूला ग्रन्थकर्तृदेशप्रसिद्धिर्यथा भर्तृविषया निर्दोषचक्षुर्जनिता प्रमाणभूताऽपि मतिः "मृतोभर्त्तुर्द्रष्टुमयोग्य एव किन्तु प्रेत एवायं दृश्यते "इत्यसम्भावनाविपरीतभावनारूपपुरुषदोषेणाभिमता भर्त्तुरेवायम् इति निश्चयफलाय पर्याप्ता न भवति, तथा निर्दोषवेदान्तमहावाक्यजन्या प्रमाणभूताऽपि "अह ब्रह्मास्मि" इति धीः"वेदान्ता ब्रह्मपरा न भवन्त्येव" इत्यसम्भावनाविपरीतभावनारूपपुरुषदोषाभिभूता विचारात्प्रागज्ञानादिनिवृत्तिफलाय न पर्याप्ता भवतीत्यर्थ ॥१४॥

मानमेययोरुपनिषद्ब्रह्मणोर्निर्दोषत्वात्परिशेषात्प्रमातृदोष एव फलप्रतिबन्धक इति शास्त्रीयेण विचारेण तस्यापगमे सति अप्रामाण्यशङ्कारूपप्रतिबन्धाभावात् पुनस्तस्मादेव निर्दोषवेदवाक्यात्सफला धीरुदेति । यथा भर्त्तुर्दुर्जनैररण्ये प्रक्षिप्तो जीवन्नेव पुनरागत इत्युपपत्त्या भर्त्तृज्ञानाप्रामाण्यशङ्काकारणपुरुषापराधविगमे सति तद्विषया भर्त्तुरेवायम् इति सफला धीरुदेतीत्याह—

**पुरुषापराध ··· ··· ··· धूमलता ॥१५॥**

**पुरुषापराधेति**—अत्रानुरूप दृष्टान्तान्तरमाह-मणीति । तुशब्दोऽवधारणे । मणिमन्त्रयोर्धूमोत्पत्तिप्रनिबन्धकयोरपगमे सत्येव लताकारो धूम उद्भवति पावकात् सदा धूमजननसमर्थान्नान्यथा यथा तथेहापीत्यर्थः ॥१५॥

तत्प्रदेशस्थमूर्तद्रव्यमात्रे जलसंस्पर्शनियमः, तत्प्रदेशस्थमूर्तत्व स्वसामानाधिकरण्यसम्बन्धेन आवरणरहितत्वविशिष्ट-जलसयोगव्याप्तमिति स्थिते, व्यापकतावच्छेदककोटौ छत्राद्यावरणाभावस्थनिविष्टत्वादव्याप्तेः किञ्चिदभावावच्छिन्नविषयकत्वं यदागत तदेव बाधकापनोद्यत्वमिति पर्यवस्यति । एव चैतादृशव्याप्तिग्रहः व्यभिचारशङ्कायामसत्यां यद्यपि न क्लेशसाध्यः, तथापि सत्या तस्यां तर्कबलेनापि सिध्यति । तथाहि—पूर्वोक्तोदाहरण एव मेघ विमुक्तोदकविन्दुक्रियारूपवर्षणस्य कार्यम् अभिमुखीभूताधरदेशस्थितमूर्तद्रव्यसयोगः । तत्र चान्तरालस्थित छत्राद्यावरण प्रतिवन्धकम्, आभिमुख्यसम्बन्धेन वर्षणक्रियारूपं जलसंयोगकारणविशिष्ट निरावरणमध प्रदेशस्थ मूर्त च प्रतिबन्धकाभावघटितजलसयोगीयसकलकारणविशिष्टमिति तादृशमूर्तत्व सामानाधिकरण्यसम्बन्धेन सामग्रीयुक्त सम्पन्नम् । तादृशविशिष्टमूर्तत्व यदि जलसयोगव्यभिचारि स्यात् तर्हि सामग्रीविशिष्ट न स्यात् इति तर्कस्समुदीयमानः पूर्वोक्तामुत्सर्गरूपा व्याप्ति ग्राहयतीति सर्वसम्प्रतिपन्नमेव ।

तथा च ज्ञानप्रामाण्यस्थलेऽपि पूर्वोक्तरीत्या तत्तन्मतानुसारेण सत्तादात्म्यकालसम्बन्धित्वादिरूपसत्यत्वविशिष्टविषयकत्व ज्ञानसामान्यसामग्रीप्रयोज्यम् मिथ्यात्वेनाऽज्ञायमानविषयकत्वञ्च दोषज्ञानाभावबाधकज्ञानाभावप्रयोज्यम् इत्युभय तत्तत्प्रवृत्तिप्रयोजकमिति रीत्या पूर्वोक्ताभावद्वयसहकृतज्ञानसामान्यसामग्रीजन्यज्ञानत्वे तद्विषयकत्वव्याप्तिरुत्सर्गरूपा सिद्धा । तदिद सर्वमभिप्रेत्य भट्टपादैरुक्तम्—

**तस्माद् बोधात्मकत्वेन प्राप्ता बुद्धेः प्रमाणता ।**
**अर्थान्यथात्वहेतूत्थदोषज्ञानादपोद्यते ॥ इति ॥**

अयञ्चोत्सर्गतर्कः भट्टपादैरेवाऽऽविष्कृत इत्युक्त्वा खण्डनकारेण निरूपित चैतत् ईश्वराभिसन्धौ वेदप्रामाण्ये, तथा येन सौगतोऽपि न विप्रतिपत्तुमर्हति इति वदता प्रस्तुत ।

त्रिकालाबाध्यवस्तुविषयकत्वस्य प्रमात्वसिद्धिरपि अनेनैव तर्केण भवति । तथाहि मिथ्यात्वेनाऽज्ञानमानवस्तु विषयकत्वस्य पूर्वोक्तरीत्या सिद्धौ विशिष्टविषयकत्वरूप नैयायिकोक्त प्रामाण्यचिह्नमभिव्यज्यते । तेन च तादृशप्रमात्वसिद्धि, विशिष्टविषयकत्वस्य तादृशप्रमात्वव्याप्यतायाः पूर्वमेव व्यवस्थापितत्वात् । एवञ्चानभ्यासदशापन्नज्ञाने इद ज्ञान प्रमा नवा इति सशयोत्पत्तिः सम्भवतीति नैयायिकानामाशयोऽपि समुपपन्न एव ।

किञ्च प्रामाण्याबाध कारणीभूत तावद्-बाधनिश्चयः दुष्टकारणजन्यत्वज्ञानञ्चेत्युभय पूर्वं निरूपितम् । श्रुतिजन्ये तत्प्रयोज्ये बा यागादिनिष्ठस्वर्गसाधन-

तादिज्ञाने पूर्वोक्तापवादकयोर्मध्ये बाधनिश्चयस्तावत् कालत्रयेऽपि न सम्भवत्येव । प्रतियोगिग्रहणसमर्थस्यैव तदभावबोधकत्वस्य रसाभावादेश्चक्षुरादीन्द्रियाग्राह्यत्वोपपत्तये वक्तव्यत्वेन यागनिष्ठस्वर्गसाधनत्वाग्राहिणः प्रत्यक्षप्रमाणस्य तदभावबोधकताया कालत्रयेऽपि वक्तुमशक्यत्वात् । प्रत्यक्षस्यासामर्थ्ये सति तन्मूलानामनुमानादीनामपि सिद्धमसमर्थत्वम् । तथा च केनापि प्रमाणेन यागादिनिष्ठस्वर्गसाधनत्वादेरभावनिश्चयरूपो बाधः कालत्रयेऽपि वक्तुं न शक्यत इत्यायातम् । द्वितीयमपवारक दोषजन्यत्वज्ञानमपि द्विविधम्-निश्चयात्मकमेकम्, सशयरूपमपरम् । तयोर्मध्ये निश्चयात्मक दोपजन्यत्वज्ञान श्रुतिजन्यबोधे न सम्भवत्येव, तज्जन्यबोधकस्य भ्रमत्वे निश्चित एव खलु तादृशभ्रमात्मक निश्चितकार्य प्रति अन्वयव्यतिरेकादिना कल्प्यमानस्य भ्रमजनकत्वरूप दोपत्व निश्चेतव्य भविष्यतीति भ्रमस्यैवासप्रतिपत्तौ कुतस्त्या दोपजन्यत्वनिश्चितिरुक्तस्थले तर्कविरुद्धा ।

सशयरूपमपि दोषजन्यत्वज्ञान द्विविधम्—तज्जातीय प्रति परिगणिता भ्रमत्वहेतुभूता ये दोषास्तन्मध्येऽन्यतमजन्जत्वसशयरूप एको दोपजन्यत्वसशयः । द्वितीयस्तु—विदग्धपरिगणितातिरिक्तोऽपि कश्चन दोष स्यादिति सम्भावनया जायमानोदोषजन्यत्वसशय । तत्र प्रथमप्रकारस्तावत्प्रकृते न सम्भवति । तथाहि-प्रत्यक्षजातीये ज्ञाने दूरत्वादिरूपा, अनुमानजातीये च पञ्चविधहेत्वाभासरूपा दोषा इव शाब्दबोधेऽपि भ्रमप्रमादविप्रलिप्सा करणापाटवरूप-चतुष्टयान्यबोधे प्रागुक्तरीत्या श्रुतेरपौरुपेयत्वेन वक्तुरेवाभावात् भ्रमप्रमादविप्रलिप्साकरणापाटवान्यतमवत्पुरुषोच्चरितत्व शाब्दबोधे दोष नैव तर्कितु शक्यते, इति शास्त्रकारैः परिगणितदोपेष्वन्यतमदोपशङ्कायाश्चप्रभावेण दुष्टकारणजन्यत्वसशयस्य प्रकृते सर्वथा न प्रसक्तिरिति सिध्यति । एतदेवाभिहित कामसूत्रव्याख्यायां जयमङ्गलाया बौद्धेनापि सता टीकाकारेण शास्त्रस्याऽनभिशङ्क्यत्वात् इति सूत्रं व्याचक्षाणेन—

> **दोषास्सन्ति न सन्तीति पौरुषेयेषु युज्यते ।**
> **वेदे वक्तुरभावात्तु दोषशङ्कैव नास्ति नः ॥ इति ॥**

तथा च दुष्टकारणजन्यत्वसन्देहस्याद्यप्रकारे निरस्ते विदग्धपरिगणितदुष्टकारणजन्यत्वसम्भावनारूपैका शङ्काऽवशिष्यते । सा च प्रामाणिकाव्यवहार्या । तज्जनितदोषसम्भावनाया विदग्धपरिगणितहेत्वाभासादिष्वपि सम्भवेनानुमान ज्ञानादिष्वपि सम्भवात् प्रामाणिकव्यवहारमात्रस्योच्छेदस्स्यात् । अतस्सा शङ्का निर्मूलैव भवतीति सिद्धम् । एवञ्च—यद्विषयकनिश्चयोत्तरानाहार्यमानसज्ञाने विरोधिविषयताप्रयुक्तः पक्षे साध्यवैशिष्ट्यावगाहित्वस्य तद्व्याप्यहेतुवैशिष्ट्याव-

गाहित्वस्य च द्वयोर्व्यतिरेकः तत्वं, हेत्वाभासत्वमिति लक्षणवत् यद्विषयकनिश्चयोत्तरानाहार्यमानसज्ञाने शाब्दबोधविषयविषयकत्वस्य तत्कारणज्ञानविषयविषयकत्वस्य च द्वयोर्व्यतिरेकस्तत्व शब्ददापत्वमिति लक्षणमपि सिध्यति ।

किञ्च, वैदिकप्रवर्तनाबोधविषयत्वलिङ्गकमन्वादिसमवेतेष्टसाधनत्वानुमितौ कस्यापि हेतुदोषस्य केवलानुमानैकशरणतया पर्यालोचनेऽपि वक्तुमशक्य तैव । प्रवर्तनाबोधस्य शाब्दबोधात्मकस्याऽस्मिन्पक्षेऽनभ्युपगमेऽपि न क्षतिः । इमानि पदानि वाक्यतात्पर्यविषयीभूतार्थसंसर्गबोधेच्छयोच्चरितानि, अनाप्तानुच्चारितत्वे सति आकाङ्क्षादिमत्पदकदम्बकत्वात् इत्याद्यनुमानेन वैशेषिकैर्वाक्यार्थबोधमात्रस्यैवानुमितौ अन्तर्भाव वदद्भि वैदिकलिङ् प्रवर्तनबोधेच्छयोच्चरित', अनाप्तानुच्चरितसतात्पर्य्यकलिङ्त्वात्, लौकिकप्रवर्तना बोधकलिङ्वत् इत्यनुमानस्यापि सूचितत्वेन, तत एव प्रवर्तनाबोधेच्छयोच्चारितत्वानुमितेः पूर्वोक्तरीत्यैव हेत्वाभासरहितायाः प्रमाभूताया सम्भवेनेष्टसाधनत्वानुमितिहेतुभूतप्रवर्तनाबोधविषयताया अनुमानेनैव सिद्धे. । वैदिकलिङ्धर्मिकानुमितौ साध्यमानेच्छा तु वेदस्यापौरुषेयत्वेन अध्यापकपरम्परेच्छैव तादृशी भवितुमर्हतीति न कोऽपि दोष । अनुमानप्रामाण्यवादिभिश्च परिगणितहेत्वाभासशून्यहेतोरनुमीयमानार्थे विपरीतार्थसाधकानुमितेर्भ्रमत्वनियमोऽङ्गीकृत एव । तदुक्त गदाधरभट्टाचार्ये.—अथवा तत्त्वनिर्णय साध्यवत्ताज्ञाने प्रभात्वनिर्णय. । तत्र चानुमापकहेतोर्व्याप्त्यादिविशिष्टत्वरूपसद्धेतुत्वज्ञानमिव विपरीतकोटिसाधकहेतोर्दुष्टत्व ज्ञानमप्युपयुज्यते-प्रकृतसाध्यग्रहा प्रामाण्यग्राहकविपरीतकोटिसाधकहेत्वदुष्टत्वप्रविघटनद्वारे'ति ।

किञ्च, अदुष्टकरणजन्यत्वज्ञानादेव ज्ञानस्य प्रामाण्य न्यायालयेष्वपि स्वीक्रियते । गुणवतां साक्षिणामलामस्थले हि दोषवत्तयाऽनिश्चितानामपि साक्षिणा परिग्रहो न्यायालयेषु दृश्यते । पारलौकिकश्रेयस्साधनरूपधर्मविषये निर्दुष्टकरणजन्यस्य वेदजन्यज्ञानस्य प्रमात्वानभ्युपगम' उक्तव्यव हारन्यायविरुद्धइत्यत्र कस्य वा विप्रतिपत्तिर्भवितुमर्हति । गुणवत्साक्षिस्थलेऽपि गुणवत्त्वेन-निर्दोषत्वमनुमायैव साक्षिणः साक्ष्य परिगृह्यते, न तु साक्ष्यमूलभूत ज्ञान मानान्तरजनितमात्मनि समुत्पाद्येति लोकसिद्धमेतत्, क्वचिदपि साक्ष्यस्थले निर्दुष्टकरणजन्यत्वज्ञानमेव साक्ष्यस्य प्रमात्वे चिह्नम् । अदुष्टहेतोरसाधकत्वशङ्कायान्तु-अनुमानप्रामाण्यस्यैवोच्छेदः प्रसज्येत । अस्य न्यायस्य वेदवाक्येष्वप्यतिदेश कर्त्तुं शक्यते ।

वस्तुतस्तु-ज्ञानस्यापरिपूर्णत्वमेव भ्रमत्वम् । सर्वाणि ज्ञानानि स्वविषये यथार्थान्येवेत्यख्यातिवादिना मत परीक्षित पूर्वम् । तादृशमपरिपूर्ण ज्ञान भ्रमसामान्ये कारणमिति ख्यात्यन्तरवादिना मतम् । मतद्वयेऽपि कुत्रचिज्ज्ञाने

भ्रमत्वकल्पनायां कर्त्तव्याया सर्वैरपि ख्यातवादिभिः स्वरूपतः कारणतो वा ज्ञानस्यापरिपूर्णता प्रसाधनीया, अन्यथा भ्रमत्वकल्पनानुपपत्तेरिति सर्वसम्प्रतिपन्नोऽयमर्थः। एक कोटिस्मरणरूपज्ञानस्य धर्मिज्ञानसम्प्रतिपन्नोपाधिनिष्ठत्रैकालिकनिषेधप्रतियोगित्वरूपमिथ्यात्वपर्यवसितासंसर्गतद्व्याप्यान्तराज्ञानवैशिष्ट्यमेव ह्यपरिपूर्णत्वम्, ततोऽन्यस्य दुर्वचत्वात्। एतादृशापरिपूर्णत्वकल्पना प्रतिपन्नोपाधौ धर्मिणि कोटेस्त्रैकालिकनिषेधस्य तद्व्याप्यस्य वा प्रमाणान्तरप्रतीतत्वे एवोपपद्यते। वैदिकवाक्यजन्ययागादिनिष्ठस्वर्गसाधनत्वादिबोधस्थले चापरिपूर्णत्वमुक्तरूप कथमपि वक्तुमशक्यमेव, यागगतस्वर्गसाधनत्वाद्यभावस्य तद्व्याप्यस्य वा केनापि प्रामाणेन ज्ञातुमशक्यत्वं पूर्वमुपपादितम् तथा च यथोक्तज्ञानस्यास्य भ्रमत्वमङ्गीकुर्वन्तः यथोक्तज्ञाना परिपूर्णत्वमेव प्रमात्वचिह्नमवद्योतयन्ति। अयमाशयो नैयायिकैरपि भङ्गयन्तरेण व्यक्तीकृतः—

अनुमिति प्रतिबन्धकयथार्थज्ञानविषयत्व हेत्वाभासत्वम् इति हेत्वाभासलक्षण कुर्वद्भिः।

यागादिस्वर्गसाधनत्वबोधप्रतिबन्धकयथार्थज्ञानस्य शङ्कितुमप्यशक्यत्वेन यथोक्तहेत्वाभासरूपदोषशून्यत्वस्य ज्ञानगतपरिपूर्णतया एव निजहेत्वाभासलक्षणद्वारा तैर्व्यञ्जितत्वात्। वेदान्तिभिरप्यधिष्ठानज्ञानस्य भावरूपस्य भ्रमसामान्यहेतुत्वं वदद्भि. प्रमाणसिद्धस्यैवाज्ञानविषयत्व स्वीकृत्य तस्याधिष्ठानस्य सर्वथाऽप्रामाणिकत्वेन यथार्थज्ञानविषयत्वे तदज्ञानस्य भ्रम हेतुत्व वक्तुमशक्यमेवेति तादृशस्थले ज्ञानस्यापरिपूर्णत्व शङ्कितुमशक्यमित्येव समर्थ्यत इत्यदुष्टकरणजन्यस्य ज्ञानस्स भ्रमत्वशङ्का नैव सम्भवतीति सर्वतन्त्रसिद्धान्तस्सिद्धः। एवञ्च वैदिकदार्शनिकाना वेदप्रामाण्यंप्रायोरूपेणैकमेवेति सिद्धम्।

# अनुशीलितग्रन्थपञ्जी


| | ग्रन्थः | ग्रन्थकर्त्ता | ग्रन्थप्रकाशकनाम, प्रकाशनभवनादीनि |
|---|---|---|---|
| १. | अद्वैतसिद्धिटीका | गौडब्रह्मानन्दः | निर्णयसागरः, मुम्बयी |
| २. | अष्टाध्यायी | पाणिनिः | — |
| ३. | ऋग्वेदः | — | — |
| ४. | ऋग्वेदभाष्योपक्रमणिका | सायणाचार्यः | डॉ० पशुपतिनाथ शास्त्री, संस्कृत साहित्य परिषद्-ग्रन्थमाला नवम-संख्या |
| ५. | काव्यप्रकाशः | मम्मट भट्टः | द्वितीयं संस्करणम्, खिस्ताब्दः १८८६ महेशचन्द्रः, कलिकाता |
| ६. | काव्यप्रकाश-प्रस्तावना | वामनाचार्यः झलकीकरोपनामा | पुण्यपत्तनम् |
| ७. | काव्यानुशासनम् | हेमचन्द्रः | काव्यमाला-७०, द्वितीयं संस्करणम् खिस्ताब्दः १९३४, निर्णय-सागर, मुम्बयी । |
| ८. | कुसुमाञ्जलिः | उदयनः | महामहोपाध्याय-श्रीकामाख्यानाथतर्कवागीशः कालिकाता । |
| ९. | किरातार्जुनीयम् | भारविः | — |
| १०. | खण्डनखण्डखाद्यम् | श्रीहर्षः | चौखम्बा, काशी, खिस्ताब्दः १९१४ |
| ११. | छान्दोग्योपनिषद् | — | — |

| | | |
|---|---|---|
| १२. तत्वप्रदीपिका (चित्सुखी), | चित्सुखाचार्यः | द्वितीय संस्करणम् ख्रिस्ताब्दः १९८१ निर्णयःसागरः, मुम्बयी ; |
| १३. तन्त्ररहस्यम् | रामानुजाचार्यः | बडोदा, ख्रिताब्दा', १९५६ |
| १४. तन्त्रवार्त्तिकम् | कुमारिलभट्टः | काशीसस्कृतग्रन्थमाला, चौखम्बा, ख्रिस्ताब्द, १९०३ । |
| १५. तैत्तिरीयोपनिषद् | — | — |
| १६. ध्वन्यालोकः | आनन्दवर्धनः | काशी संस्कृतग्रन्थमाला-१३५, वि० सं० १९९३ चौखम्बा, काशी |
| १७. ध्वन्यालोकलोचनम् | अभिनवगुप्तः | चौखम्बा, काशी, काशीसस्कृत-ग्रन्थमाला, १३५, वि० स० १९९३ । |
| १८. नयनप्रसादिनी (चित्सुख्याः टीका) | परमहसप्रत्यग्रूप-भगवान् | द्वितीय शस्करणम्, ख्रिस्ताव्दः १९३१, निर्णयसागरः, मुम्वयी । |
| १९. नयविवेकः | भवनाथमिश्रः | मद्रासमिश्वविद्यालयः |
| २०. नयविवेकः (टीका) | रविदेव. | मद्रास विश्वविद्यालयः |
| २१. निरुक्तम् | यास्कः | — |
| २२. नैषधीयचरितम् | श्रीहर्षः | — |
| २३. न्यायदर्शनम् | गौतम. | काशी संस्कृतपुस्तकमाला, १०६, स० १९९२, चौखम्बा, काशी । |
| २४. न्यायबिन्दुटीका | धर्मोतरः | काशीप्रसाद जायसवाल, शोध सस्थान, पटना ख्रिस्ताब्द, १९५५ |
| २५. न्यायकन्दली | श्रीधरः | विजयनगरं, सस्कृतग्रन्थमाला |
| २६. न्यायवार्त्तिकतात्पर्यटीका, | वाचस्पतिमिश्रः | चौखम्बा सस्कृत ग्रन्थमाला |
| २७. न्यायवार्त्तिकतात्पर्यपरिशुद्धि | उदयन. | चौखम्वा सस्कृतग्रन्थमाला |
| २८. न्यायमञ्जरी | जयन्तभट्टः | काशीसंस्कृतपुस्तकमाला, १०६ सं० १९९२, चौखम्बा, काशी । |
| २९. न्यायसूत्रवार्त्तिकम् | उद्योतकरः | — |
| ३०. प्रभाकरविजयः— | नन्दीश्वरः | म० म० अनन्तकृष्णशास्त्री, सस्कृत साहित्य परिषद् ग्रन्थ-माला सं० १२, कलिकाता ख्रिस्ताब, ५९२६ । |

| | | |
|---|---|---|
| ३१. प्रमाणवार्त्तिकम् | धर्मकीर्त्तिः | किताब महल, प्रयाग। |
| ३२. पञ्जिका (तत्वसंग्रहटीका) | कमलशील | बडोदा, ख्रिस्ताब्द-१९२६। |
| ३३. प्रशस्तपादभाष्यम् | प्रशस्तपादमुनिः | काशी |
| ३४. ब्रह्मसूत्रम् | बादरायण. | — |
| ३५. वैशेषिकसूत्रम् | कणादमुनिः | चौखम्बा ख्रिस्त.ब, १९२३। |
| ३६. भाषापरिच्छेद· | विश्वनाथ | काशी संस्कृतग्रन्थमाला, ६, द्वितीय संस्करणम्, ख्रिस्ताब्द. १९५१, चौखम्बा, काशी। |
| ३७. भाट्टरहस्यम् | — | — |
| ३८. महाभारतम् | व्यास | — |
| ३९. मीमांसादर्शनम् | जैमिनि | — |
| ४०. मुक्तावली | विश्वनाथ | काशी संस्कृतग्रन्थमाला-६, द्वितीय संस्करणम् ख्रिस्ताब्द. १९५१, चौखम्बा काशी। |
| ४१. योगदर्शनम् | पतञ्जलिः | — |
| ४२. रसगङ्गाधरः | पण्डितराज-जगन्नाथः | काव्यमाला-१२, तृतीय संस्करणम् निर्णयसागर, मुम्बयी। |
| ४३. रसगङ्गाधर टीका | नागेश. | काव्यमाला-१२, तृतीय संस्करणम् निर्णयसागर. मुम्बयी। |
| ४४. रामायणम् | वाल्मीकिः | — |
| ४५. वाक्यपदीयम् | भर्तृहरिः | वाराणसी-संस्कृतपुस्तकमाला |
| ४६. वात्स्यायनभाष्यम् न्यायदर्शनस्य | वात्स्यायन. | — |
| ४७. श्लोकवार्त्तिकम् | कुमारिलभट्टः | चौखम्बा-संस्कृतग्रन्थमाला, काशी, ग्रन्थसंख्या-३, ख्रिस्ताब्दः १८९८। |
| ४८. श्लोकवार्त्तिकम् | उम्बेकः | मद्रास विश्वविद्यालय. ख्रिस्ताब्दः १९९८। |
| ४९. श्लोकवार्त्तिकम् (न्यायरत्नाकर) | पार्थसारथिमिश्र | चौखम्बा-संस्कृतग्रन्थमाला ग्रन्थसंख्या ख्रिस्ताब्द, १८९८ |
| ५०: श्लोकवार्त्तिकम् (काशिका) | सुचरितमिश्रः | अनन्तशयनसंस्कृतग्रन्थावलि, ग्रन्थाङ्क-९० ख्रिस्ताब्द. १८९६ |

| | | | |
|---|---|---|---|
| ५१. | शास्त्रदीपिका | पार्थसारथिमिश्रः | निर्णय सागरः मुम्बयी ख्रि० १६१५ |
| ५२. | सर्वदर्शनसंग्रहः | सायणमाधवः | पुण्यपतनस्थ-प्राच्यविद्यासंशोधन-मन्दिरम् । |
| ५३. | सांख्यदर्शनम् | कपिलः | — |
| ५४. | साहित्यदर्पणः | विश्वनाथः | शकाब्दाः १८३४, गुरुनाथः कलिकाता । |
| ५५ | संक्षेपशारीरकम् | सर्वज्ञमुनिः | हरिदाससस्कृतग्रन्थामाला वेदान्ते चतुर्थः पुष्पम् ख्रि० १६२४। |
| ५६. | शबरभाष्यम् | शबरस्वामी | आनन्दाश्रम संस्कृतग्रन्थमाला-१६२६ । |

| | | |
|---|---|---|
| ३१. प्रमाणवार्त्तिकम् | धर्मकीर्त्तिः | किताब महल, प्रयाग। |
| ३२. पञ्जिका (तत्त्वसंग्रहटीका) | कमलशील | बड़ोदा, खिृस्ताब्द-१९२६। |
| ३३. प्रशस्तपादभाष्यम् | प्रशस्तपादमुनिः | काशी |
| ३४. ब्रह्मसूत्रम् | बादरायणः | — |
| ३५. वैशेषिकसूत्रम् | कणादमुनिः | चौखम्बा खिृस्त.ब, १९२३। |
| ३६. भाषापरिच्छेदः | विश्वनाथः | काशी संस्कृतग्रन्थमाला, ६, द्वितीय संस्करणम्, खिृस्ताब्दः १९५१, चौखम्बा, काशी। |
| ३७. भाट्टरहस्यम् | — | — |
| ३८. महाभारतम् | व्यास. | — |
| ३९. मीमासादर्शनम् | जैमिनिः | — |
| ४०. मुक्तावली | विश्वनाथः | काशी संस्कृतग्रन्थमाला-६, द्वितीय संस्करणम् खिृस्ताब्दः १९५१, चौखम्बा काशी। |
| ४१. योगदर्शनम् | पतञ्जलिः | — |
| ४२. रसगङ्गाधरः | पण्डितराज-जगन्नाथः | काव्यमाला-१२, तृतीय संस्करणम् निर्णयसागर, मुम्बयी। |
| ४३. रसगङ्गाधर टीका | नागेशः | काव्यमाला-१२, तृतीय संस्करणम् निर्णयसागरः मुम्बयी। |
| ४४. रामायणम् | वाल्मीकिः | — |
| ४५. वाक्यपदीयम् | भर्तृहरिः | वाराणसी-संस्कृतपुस्तकमाला |
| ४६. वात्स्यायनभाष्यम् न्यायदर्शनस्य | वात्स्यायनः | — |
| ४७. श्लोकवार्त्तिकम् | कुमारिलभट्टः | चौखम्बा-संस्कृतग्रन्थमाला, काशी, ग्रन्थसंख्या-३, खिृस्ताब्दः १८९८। |
| ४८. श्लोकवार्त्तिकम् | उम्बेकः | मद्रास विश्वविद्यालयः खिृस्ताब्दः १९९८। |
| ४९. श्लोकवार्त्तिकम् (न्यायरत्नाकर) | पार्थसारथिमिश्रः | चौखम्बा-संस्कृतग्रन्थमाला ग्रन्थसंख्या खिृस्ताब्द, १८९८ |
| ५०: श्लोकवार्त्तिकम् (काशिका) | सुचरितमिश्रः | अनन्तशयनसंस्कृतग्रन्थावलिः, ग्रन्थाङ्क-९० खिृस्ताब्दः १८९६ |

| | | | |
|---|---|---|---|
| ५१. | शास्त्रदीपिका | पार्थसारथिमिश्रः | निर्णय सागरः मुम्बयी ख्रि० १९१५ |
| ५२. | सर्वदर्शनसंग्रहः | सायणमाधवः | पुण्यपतनस्थ-प्राच्यविद्यासशोधन-मन्दिरम् । |
| ५३. | सांख्यदर्शनम् | कपिलः | — |
| ५४. | साहित्यदर्पणः | विश्वनाथः | शकाब्दाः १८३४, गुरुनाथः कलिकाता । |
| ५५ | सक्षेपशारीरकम् | सर्वज्ञमुनिः | हरिदाससस्कृतग्रन्थामाला वेदान्ते चतुर्थः पुष्पम् ख्रि० १९२४। |
| ५६. | शबरभाष्यम् | शबरस्वामी | आनन्दाश्रम संस्कृतग्रन्थमाला-१९२९ । |